२. एु५वै५ना५वो५अ५ग्नि५न्न५म५सा५हा५उ५। ऊर्ज्जोंन२पा२। तामा२हुवे॑ऽ२३। हा२उ२। प्रायंञ्चे२ति२ष्ठ२म२र२ति२म्२। सु२वाध्वा२ऽराऽ२३म्३। हा२उ२। वि२श्वास्या२ऽदुऽ२३। हा२उ२। ताममृ२त२म्२। इडाऽ२३भा२३४ऽ३। ओंऽ२३४५ यि५। डा५॥ ९॥

३. एु५ना४वो५अ५ग्नि४मे४ऽ५न४म५सा४। ऊ२र्ज्जोंनपा२त२ माहु२वे२। प्राऽ२३या२म्। चायितिष्ठ२म्२। आरति२म्। सु२वाध्वा२ऽरा४२म्२। वि२श्वास्या२ऽदू४२। ताममृ२त२ म्२। इडाऽ२३भा२३ ४ऽ३। ओंऽ२३४५यि५। डा५॥ १०॥

४. एु५ना४वो५अ५ग्नि४न्न४म५सो५। जो५न५पो४वा५। तामाहु२ वे२। प्राऽ२३या२म्२। चायितिष्ठ२म२। राऽ२३ती२म्२। स्व२ध्व२रम्। विश्वस्याऽ२३दू२। ताममृ२त२म्२। इडाऽ२३ भा२३४ऽ३। ओऽ२३४५यि५। डा५॥ ११॥

ऋषिः—भर्गः॥ देवता—अग्निः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

४६. शेषे वनेषु मातृषु सं त्वा मर्तास इन्धते।
अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि॥

१. शे४षे४व४ना४ऽ५यि५षु५मा५तृ४षू४। सान्त्वा२मर्त्ता२स२ः। इन्धाऽ२३ता२यि२। आतन्द्रो२ह२व्यंवाह२। सायि। हेवीऽ२उ- ष्का३२३४र्त्ता५ः। आदिद्दे२वायि। षु२राजाऽ२३सा२३४ऽ३ यि३। ओऽ२३४५यि५। डा५। णौ॥ १२॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

४७. अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥

१. अ५द५र्शि५गा५तु५वि५त्त५मा५६ए५ । यास्मिन् । व्र२ता नियार२द२धुः । उपो षु जा२३हा२३हा२यि२ । त२मारि२य२ स्य२वर्द्ध२न२म्२ । अग्नायिन्नक्षा२३ । हा२३हा२ । तु२नो२ गिर२ः । इडा ऽ२३ भा२३४ऽ३ । ओऽ२३४५यि५ । डा५ ॥ कौ ॥ १३ ॥

ऋषिः—मनुः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

४८. अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥

१. अ५ग्नि५रु५क्था५यि५रे । पु३रो२३हा४यि४ता५ः । ग्रा२वाणो२ बा । हि३रा२३ध्वा४रा५यि५ । रेचा यामि मरुतो ब्रह्माण-स्पाता४२ुयि२ । दायिवा४२ुआवाऽ२३ः । व२रोऽ२३४वा५ । णा४ऽ५यो५६हा५यि५ ॥ गो ॥ १४ ॥

२. अ५ग्नि५रु५क्था५औ५हो४हो४हा५यि५ । पु३रौ२वा२ुओ ३२ ३४वा५ । हि४ता४ः । ग्रा२वाणो२ब । हि३रौ२वा२ु ओ३२३४ वा५ । ध्व४रा४ यि४ । ऋ२चौ३हो२ । यामि मरुतो ब्रह्माणॅ-स्पाता४२ुयि२ । दायिवा४२ु आवाऽ२३ः । व२रोऽ२३४ वा५ । णा४ऽ५यो५६हा५ यि५ ॥ १५ ॥

ऋषिः—सुदीतिपुरुमीढौ ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

४९. अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम्।
अग्निं राये पुरुमीढ श्रुतं नरोऽ ग्निः सुदीतये छर्दिः ॥

१. अ५ग्नि४मी५। डि३ष्वा२३४औ३हो४वा५। आवसे२। गाथा२ भिर२शशी२। र२शौचा२३यि३षा२म्२। अ२ग्नि२रायायि। पुरुमा२३यि३ढा२। श्रु२तन्नरो। अग्निस्सू२३दी२। त२यायि छा२३४५र्ही५६५६:। दक्षा२३या२३४५ ॥ १६ ॥

ऋषिः—प्रस्कण्वः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५०. श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः।
आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥

१. श्रु३धी२३। श्रू२३४। धि४श्रु४त्क५र्ण५व४। ह्नि४भा५यि५:। दे२वैरग्नेस२। यावा२३भी२:। आसीदतु वऋहिषि मित्रो अर्या२३मा२। प्रा२तर्या२३वा२३। भा२उयिरुरा३२३४अ५ होप५वा५। ए२३। ध्व२र३आ२ ॥ मै ॥ १७ ॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५१. प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥

१. प्र५दै४वो५दा५सो४ग्नी५:। दे२व इन्द्रो न२मज्मना। अनुमा२३ ता२। रं पृथिवीम्वि२वावृतायि। तस्थौना२३। का२। स्या शार्म्म२णि२। इडा२३भा२३४२३। ओ२३४५यि५। डा५ ॥ पी ॥ १८ ॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

५२. अध ज्मो अध वा दिवो बृहतो रोचनादधि।
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण॥

१. अ५ध५ज्मा५ओ४वा५। धवादा२ऽयिवा४२ुः। बृ२ह२तो रोचाना२ऽदाधी४२ु। आ। यौ। हौ२हो२३वा२। वार्द्धा स्व२त२ न्वा२। गायिरा२ऽममा४२ु। आ जाता सौ२। हौ२हो२३वा२ ३४। हा५। हा२उ२वा२३। क्रा२तो२पृ२णा३२३४५॥ १९॥

ऋषिः—विश्वामित्रः॥ देवता—अग्निः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

५३. कायमानो वना त्वं यन्मातॄरजगन्नपः।
न तत्ते अग्ने प्रमृषे निवर्तनं यद् दूरे सन्निहाभुवः॥

१. का४या४मा४नो४ऽ५व५ना५तु४वा४म्४। य२न्मात्रे२रा। जाग२न्ना३२३४पा५ः। न२त२त्ते२अ२ग्ने२३। प्रमृषे२३हा२३ यि३निवाऽ२ुर्त्ती३२३४ना५म्५। य२दूराऽ२३यि३सा२ुन्२ु। इ३हा३भु२वा। अ२३हो४वा५हो४ऽ५यि५। डा५॥ २०॥

२. ए४का४या५। मानो। व३ना२ुतू३२३४वा५म्५। ओ२ुयि२ु। तू३२३४वा५म्५। उ४हु४वा४हा५यि५। अ३होँ२३ऽयि य२ न्मात्रे२रा। जाग२न्ना३२३४पा५ः। आ३२३४पा५ः। उ४हु४वा४ हा५यि५। अ३होँ२३ऽयि। न२तत्त२आ। ग्ना२३ यि३प्रमृषा२३ यि३। निवाऽ२ुर्त्ता३२३४ना५म्५। ता३२३४ना५म्५। उ४हु४ वा४हा५यि५। अ३होँ२३ऽयि। य२दूरे२सान्। इहा२ुभू२३४ वा५ः। भू३२३४वा५ः। उ४हु४वा४हा५यि५। अ३होँ२३२ुया३ २३४अ५हो५वा५। ऊ३२३४पा५॥ २१॥

ऋषिः—कण्वः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५४. नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥

१. नि५त्वा५म५ग्ना५यि५। म२नु२र्द्दा३२३४धा५यि५। ज्योतिर्ज्ज२ना२। या शश्वाता४२ुयि२। दी२। दायि। थ क२। ण्वाऽऋ तजा२३। तऊऽ२ुक्षा३२३४। यि४ता५ः॥ यन्न२म२स्याऽ२३। ताऽ२ुयि२ुक्रे३२३४। अ५हो५वा५। ष्टा३२३४। या५ः॥ २२॥

२. हो४वा४यि४। नि४त्वा४म५ग्ने५म४नु५र्द्दे५धे५। हो४वा४यि४। ज्योतिर्ज्जनाय शश्वते दायिदे२ऽथक२। ण्वाऽऋत[१]जा२३ऽ। तेऊऽ२ुक्षा३२३४यि४ता५ः। य२न्नामाऽ२३स्या२३। ताऽ२ुयि२ुक्रे३२३४अ५हो५वा५। ष्टा३२३४या५ः॥ २३॥

[ इति ] दशतिः ॥

ऋषिः—वसिष्ठः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५५. देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद् वो देव ओहते ॥

१. दे५वो४ऽ३वो२३द्र४वि४णो५दा५ः। पू२र्णाम्विव२ष्ट्वा२सिच२म्२। ऊद्वा२ऽसिंचा४२ु। ध्व२मुपवा२पृ२ण२ध्व२म्२। आदिद्वोदे४२ु। व ओ ह२ते२। इडाऽ२३भा२३४ऽ३। ओंऽ२३४५यि५। डा५॥ २४॥

१. मूलग्रन्थेऽत्र......ऋव......इति लिखितम्। —सम्पादकः

ऋषिः—कण्वः ॥ देवता—ब्रह्मणस्पतिः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५६. प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥

१. प्रै५तू२३ब्र४ह्मा५ण४स्प४। तीप५ः। प्र२दायिवियें२। तु२सूनृता २३। अछाऽ२उवा३२३४यि४रा५म्५। नर्यम्प२। ङ्क्ति२राधा२ऽ साऽ२ ३म्३। देवाऽ२उया३२३४ज्ञा५म्५। नाऽ२उया३२३४अ५ हो५वा५। तू३२ ३४ना५ः ॥ २५ ॥

ऋषिः—कण्वः ॥ देवता—यूपः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५७. ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥

१. ऊ२र्ध्व२ऊ२षु२णा२३ऊताऽ२३४या५यि५। तिष्ठा देवो न सविता। ऊर्ध्वोवाऽ२३जा२। स्या सनि२ता२। यादञ्जिभी४२उः। वा२घाद्भी४२उः। वीवी४२उ। ह्व२यामाऽ२३हा२३४ऽ३यि३। ओऽ२३४५यि५। डा५ ॥ २६ ॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

५८. प्र यो राये निनीषति मर्तो यस्ते वसो दाशत्।
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥

१. प्र४यो४रा४या४ऽ५यि५नि५नी५ष४ता४यि४। मर्तो यस्ते व२ सो दाशत्। सवीराऽ२३धा२ ॥ ता अग्न२उ२। उक्क्थ२श२ꣳ२ सिनम्। त्मना साऽ२३हा२। स्त्र२पोषाऽ२३यि३णा२३४ऽ३ म्३। ओऽ२३-४५यि५। डा५ ॥ २७ ॥

ऋषिः—कण्वः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३१ २ ३ २ ३ १ २ ३ १ २
५९. प्र वो यह्वं पुरूणां विशां देवयतीनाम्।
३ २ ३ २ ३ १ २ ३ २उ ३ २ ३ १ २
अग्निं सूक्तेभिर्वचोभिर्वृणीमहे यं समिदन्य इन्धते ॥

१. प्र५वा४ः। य२ह्वंपुरू ऽ२ ३णा२। म्२। वि२शा न्देव२यता ऽ२ ३ यि३ना२म्२। अ२ग्निंसूक्ते भिर्व्वचोभिर्वृ२णीमा ऽ२ ३हा२ यि२। या४सा४२मायिदा४२न्२। य इन्ध२ते२। इडा ऽ२ ३भा २ ३४ ऽ३। ओ ऽ२ ३४५यि५। डा५ ॥ २८ ॥

ऋषिः—उत्कीलः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३ २ ३ २ ३ २ ३ २ ३ १ २र
६०. अयमग्निः सुवीर्यस्येशे हि सौभगस्य।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥

१. अ५य५म५ग्नि५स्सु५वी५र्य५स्य५हा५उ५। आयिशे२हि२ सौभाग२स्या२। होवा२ ३हा२यि२। रा२यईशे२स्वपत्य२। स्या गो२ऽमाता ऽ२ ३ः। होवा२ ३हा२यि२। ई२शेहा ऽ२ ३यि३व्रे२ ३। होवा२ ३हा२। त्राहाथा२ना२म्२। इडा ऽ२ ३भा२ ३ ऽ४ ऽ३। ओ ऽ२ ३४५यि५डा५ ॥ २९ ॥

ऋषिः—वसिष्ठः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ १ २ ३ १ २र ३ २
६१. त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे।
१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम् ॥

१. त्व४म५ग्ने५गृ५ह४प५ता४यि४ः। त्वंहोता नो२अध्वरायि। त्वम्पो ऽ२ ३ता२। वायिश्ववा२। र२ प्रचायिता२ः। अ३हो२ ३४ वा३हा२यि२। याक्षायि या ऽ२ ३सी२ ३। होवा२ ३हा२यि२। च२ वारा ऽ२ ३या२ ३४ ऽ३म्३। ओ ऽ२ ३४५यि५। डा५ ॥ ८ ॥ ३० ॥

२. त्व४म५ग्रे५गृ५ । हा४ऽ५प५ती४ः । त्वꣳ२ुहो३२३४ता५ । नो२ अ२ध्वा३२३४रा५यि५ । त्वाऽ२ुम्पो३२३४ता५ । वि२श्वा२ुवा ३२३४रा५ । प्र२चे२ता२३ः । यक्षाये२३ । या२ुसा३२३४औ५ हो५वा५ । च२वारिया३२३४५म्५ ॥ ३१ ॥

३. त्व५मा२३ग्रे४गृ५हा४प४ती५ः । त्वꣳहोता२नो२अध्वररे२ । त्वाऽ२३म्पो३ता२ु । अ३हो२३४यि४ । अ४हौ । ५ । वा३हा२ यि२ । वायिश्ववा२ । र२प्रचा । येता२ुः । अहो२३४यि४ । अ४ होवा३हा२यि२ । यक्षायियासा२ु । अ३हो२३४यि४ । अ४हो५ । वा३हा२यि२ । व२वाराऽ२३या२३४ऽ३म्३ । ओऽ२३४५यि५ । डा५ ॥ ३२ ॥

ऋषिः—विश्वामित्रः ॥ देवता—अग्निः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ १ २र ३ १ २
६२. सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये ।
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
अपां नपातं सुभगं सुदंससं सुप्रतूर्तिमनेहसम् ॥

१. स५ । खा५य५स्त्वा५अ५हो४हो४हा५यि५ । व२वृ२ु । मा३२३४ हा५यि५ । दे२वंमर्त्ता२३हा२३ । स ऊऽ२ुता३२३४या५यि५ । अ२पान्नपा[1]२३ । त४ꣳ४सु५ । भा३गौ२ । वा२३हा२३यि३ । सूदꣳ२ुसा३२३४सा५म्५ । सु२प्रतूऽ२३र्त्ती२म्२ । अ२नेहाऽ२३ सा२३४ऽ३म्३ । ओऽ२३४५यि५डा५ ॥ छै ॥ ३३ ॥

ऋषिः—श्यावाश्ववामदेवौ ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१ २ ३ १ २ ३ १ २र ३ १ २
६३. आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।
३ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३क २र
इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम् ॥ १ ॥

---

१. मूलपाठेऽत्र '......न्नप२३' इति लिखितम् । —सम्पादकः

१. आ४जु५हो५ता४। ह२विषा मर्ज्या४२ध्वा उ वा४२। नि होतारंगृहपतिं दधा४२यि२ध्वा उ वाऽ२३४। इ३डा२३४स्प३ दा२यि२। नमसा रात२हाव्या४२म्२। सापर्य२ता। याजातं२ पाऽ२३। स्ति४यो४वा५। आ४ऽ५नो५६हा५यि५। दू॥ ३४॥

ऋषिः—उपस्तुतो वार्ष्टिहव्यः॥ देवता—अग्निः॥ छन्दः—जगती॥
स्वरः—निषादः॥

६४. चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे।
अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यां३ चरन्॥

१. ओयि। चित्रइछायिशो२ऽस्तरुणऽ२३। स्या४ऽ३व२क्ष३थ५ः। ओयि। न यो मातारा२ऽवनुवाऽ२३यि३। ती४ऽ३धा२त३वे५। ओयि। अनूधा यादजीजनाऽ२३त्३। आ४ऽ३धा२चि३दा५। ओयि। ववक्षत्साद्यो२ऽमहिदूऽ२३। ति३या२३ञ्चा४ऽ५रा५६ ५६न्६। दू२त्यञ्चरन्महे३२३४५॥ श्रौ॥ ३५॥

२. चि५त्रा५६ए५। ए२३ऽ२३४। शि४शो५स्त४रु५ण५स्य५व५ क्ष४थ५ः। क्ष४थ५ः। हि५हि५हि५या५६हा५उ५। ए२३ऽ२३४। न४यो४मा४त४रा५व५न्वे४ति५धा४त४वे५। त४वे५। हि५हि५ हि५या५६हा५उ५। ए२३ऽ२३४। आ४नू५धा४य४द४जी५ज५ न५द४धा४चि५दा४चि४दा५। हि५हि५हि५या५६हा५उ५। ए२३ऽ२३४। व४व४क्ष५त्स५द्यो४म४हि५दू५ति४य५ञ्च४र५ न्५। च४र५न्५। हि५हि५हि५या५६। हा५उ५। वा५। ए२३। क्रे२तून्॥ ङो॥ ३६॥

ऋषिः—बृहदुक्थः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

६५. इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व।
संवेशनस्तन्वे३ चारुरेधि प्रियो देवानां परमे जनित्रे ॥

१. ओ३ऽ४हा५। ह३हा२३२। इ२दन्तए। का२३म्परः। ऊ२त३ए४
का५म्५। तृ२ती<u>ये</u>ना। ज्यो<u>ति</u>षा२३। स२म्वि३श४स्वा५।
संवेशनाः। त२नु<u>वे</u> चा२रु३रे४धी५। ओ३ऽ४हा५। ह३हा२
यि२। प्रि२<u>यो</u> <u>दे</u>वा। न२३म्परा। मा२३४ऽ३यि३। जा२३
ना४ऽ५यि५त्रा५६यि५ ॥ ३७ ॥

ऋषिः—कुत्सः ॥ देवता—अग्निः ॥ छन्दः—जगती ॥ स्वरः—निषादः ॥

६६. इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥

१. इ३मा२ः२स्तो३२३४मा५म्५। अ२र्ह२हा२ते३२३४जा५।
ता<u>वे</u>दसे२३। होयि। र३था२मी३२३४वा५। स२म्मा२हे३२३४
मा५। मा<u>नी</u>२षया२३। होयि। भ३द्रा२ही३२३४ना५ः। प्र२मा२
ती३२३४ रा५। स्य। स२ः२सदे२३। होयि। अ३ग्ना२यि२
सा३२३ख्या५। यि५। मा२रा२यि२षा३२३४मा५। वाय२न्तवा
२३। हो२३४५ यि५। डा५ ॥ ३८ ॥

ऋषिः—भरद्वाजः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

६७. मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥

१. मू५र्द्धो४हो४हा५यि५। न२न्दा३२३४यि४वा५ः। अरतायिम्।
पृथी२३व्या२ः। <u>वै</u>२श्<u>वा</u>नराम्। ऋ२तआ। <u>जा</u>२त३म४ग्री५म्५.

क२वी२ःसम्राजमतिथायिम्। जेनाऽ२३ना२। म्२। आ२सन्नष्पा। त्रा२३ञ्जनाया२३४ऽ३। ता२३दा४ऽ५यि५वा५६५६ः॥ ३९॥

२. हो४वा५यि५। मू५र्द्धो४हो५यि५। नं२दायि। वा२३अरातिरु म्पृ३थी४व्या५ः। इ२हो२इ२या२३। इ३ॅया२। वै२श्वानराम्। ऋे२तआ। जा२उत३म४ग्नी५म्५। इ२हो२इ२या२३। इ३ॅया२। क२वि२ःसंम्प्रा। जा२३मति। थि२उञ्ज३ना४ना५म्५। इ२हो२इ२ या२३। इ३ॅया२। आ२सन्नष्पा। त्रा२३ञ्जनाय२उन्त३दे४वा५ः। इ२ हो२इ२या२३। [१]इेऽ२उ। या३२३४। अ५हो५वा५। ई३२३ ४५॥ ४०॥

इत्यर्द्धः प्रपाठकः॥

ऋषिः—भरद्वाजः॥ देवता—अग्निः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

६८. वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः।
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः॥

१. वि४त्व४त४। ओ४हा४यि४। आपो न पर्व्वतस्य२पाऽ२३ष्ठा२ त्२। ऊ२क्थे२भिरग्ने जनयन्त२दाऽ२३यि३वा२ः। तन्त्वा गिरस्सुष्टुतयो वाज२याऽ२३न्ती२। आ२जिन्न गायिर्व्वेवाऽ२३ हा२३ः। जाये२३। ग्यूऽ२उरा३ २३४अ५हो५वा५। अ२श्वाऽ२३ ४५ः॥ १॥

२. हा५। य३या२उयि२उदि३वो४हा५यि५। वि४त्व५त्५। आपो। न२पर्व्व। त२उस्य३पृ४ष्ठा५त्५। हा५। य३या२उयि२उदि३वो४हा५ यि५। उ४क्था५यि५। भिरा। ग्ने२३जन। यं२उत३दे४वा५ः।

१. अत्र 'एऽ२' इति स्यात्। —सम्पादकः

हा५ । य३या२उदि३वो४हा५यि५ । तं४त्वा५ । गिराः । सु२ष्टु२
तयः । वा२उ ज३यं४ती५ । हा५ । य३या२उयि२उदि३वो४हा५यि५ ।
आ४जी५म्५ । न गायिर्व्वाऽ२३हा२३ः । जाये२३ । ग्यूऽ२उरा
३२३४अ५हो५वा५ । अ२श्वाऽ२३४५ः ॥ २ ॥

ऋषिः—वामदेवः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

२ ३ १ २ ३१ २ ३१ २र ३ २ ३ १ २
६९. आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
३ २ ३ १ २ ३ २३ २ ३ १ २ ३ १ २
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥

वामदेव्यम्—

१. आ४वो५रा५जा४ । न३म२ध्व३ । र२उस्य३रु४द्रा५म्५ । हो ।
ता२ । राम् । स२ । त्ययजा२३म्३ । रो२उद३सी४यो५ः । अ२ग्निं
पु । रा । त२न२यि३ । त्नो२उर३चि४त्ता५त्५ । हिरण्य२ । रू ।
पा२३मवा । सा२३४ऽ३यि३ । का२३र्णू४ऽ५ध्वा५६म्६ ॥
दे ॥ ३ ॥

ऋषिः—वसिष्ठः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३ २उ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २
७०. इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।
१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ॥

वैश्वज्योतिषे द्वे—

१. इं३धा२३ऽ२३४यि४ । हा५उ५ । ३ । रा४जा५स४म५र्यो४न४ ।
मो४भि५रो४भी५ःओ४भी५ः । हा५उ५ । ३ । य३स्या२३ऽ२३४ ।
हा५उ५ । ३ । प्र४ती५का५मा४हु५तं५घृ५ । ता४यि४ना५ ।
आ४यि४ ना५ । आ४यि४ना५ । न३रा२३ऽ२३४ः । हा५उ५ । ३ ।

हप्व्ये४भि५ री५डा५ते५स५। बा४धा५बा४धा५:। बा४धा। आ३ग्ना२३ऽ२३४यि४। हा५उ५।३। अ२ग्र२मुषसाऽ२३ म३ शा२उ२। वा२३ ची३२३४५॥ री॥ ४॥

२. हौहो४२ु। २। हौहोयि। इं२धे२रा२जा२स२म२र्यो२ना२३ मोभी४२ुः। ओभी४२ुः। २। य२स्य२प्र२ती२क२मा२हु२तं२ घ्रे२३ तायिना।४२ु। आयिना४२ु। २। न२रो२ह२व्ये२भी२री२ ड२ते२सा२३बाधा४२ु। बाधा४२ुः। हौहो४२ु। २। हौहोयि। आ२ग्नि२र२ग्र२मु२षसाऽ२३म३शा२उ२। वा२३ची३२३ ४५:॥ ५॥

ऋषिः—त्रिशिरास्त्वाष्ट्रः॥ देवता—अग्निः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

७१. प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति।
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध॥

याम द्वे—

१. प्र२के२तुना। बृ२ह२ता या। ति२यग्नायिः। होइहोवा२३होइ। आ२रो२दसायि। वृ२ष२भो रो। र२वीतायि। होयिहोवा२३ हौयि। दि२व२श्चिदा। ता२दुपमाम् उ२दानाट्। होइहोवा२३ होयि। अ२पा२मुपा। स्थे२महिषो। व२वर्द्धा। होयिहोबा२ हा२३ऽउ। बाऽ२३। दे२३। दिवाऽ२३४५म्५॥ ६॥

२. हा५। हा२अ२होर्२ुयि२ु। प्रा३२३४के५। तुना। बृ२ह३ता२३। या२ुति३य४ग्नी५:। हा५। हा२अ२होर्२ुयि२ु। आ३२३४रो५। दसायि। वृ२ष३भो२३। रो२ुर३वी४ती५। हा५। हा२अ२हो२ु

यि२ु । दी३२३४वा५ः । चिदा । ता२३दुप । मा२ुमु३दा४न५ट्५ ।
हा५ । हा२अ२हो२ुयि२ु । आ३२३४पा५ । म्५उपा।स्थे२३
महिषो२ुव३व४र्था५ । हा५हा२अ२हो२ु । वा३२३४अ५ । हो५
वा५ । ए२३ । दिवाऽ २३४५म्५ ॥ ७ ॥

ऋषिः—वसिष्ठः ॥ देवता—अग्निः ॥ छन्दः—त्रिपाद्विराड्गायत्री ॥ स्वरः—षड्जः ॥

७२. अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् ।
दूरेदृशं गृहपतिमथव्युम् ॥

इन्द्रस्य वैराजे द्वे—

१. हा५उ५ । ३ । आ४ग्नी५म्५ । न२राः । ३ । दी२३धिति । भि२र३
र४ण्यो५ः । हा५उ५३ । हा४स्ता५ । च्यु२ताम् । ३ । ज२नयात२
प्र३श४स्त५म्५ । हा५उ५३ । दू४रा५यि५ । दृ२शाम् । ३ ।
गृ२हपति२म३थ४व्यु५म्५ । हा५उ५३ । वा५ । ई३२३ ४५ ॥ ८ ॥

२. हा५उ५३ । आ४ग्नी५म्५ । न२राःदी२३धिति । भि२र३र४
ण्यो५ । ण्यो५ । ण्यो५ः । हा५उ५३ । हा४स्ता५ । च्यु२ताम् ।
ज२नय । त२प्र३श४स्त५म्५ । स्त५म् । २ । हा५ । उ५३ । दू४रा५
यि५ । दृ२शाम् । गृ२हपाति२म३थ४व्यु५म्५ । व्यु५म्५ । २ ।
हा५उ५३ । वा५ । ई३२३४५ ॥ ९ ॥

[ इति ] दशतिः ॥

ऋषिः—बुधगविष्ठिरौ ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

७३. अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥

श्यैतम्—

१. अ४बो५धि५या४। ग्नायिस्स२मि। धा२जना२ॅना२म्२। प्रता-
यिधे२३नू२म्२। इ२वा२य२तीमुषासा२म्२। यह्वाई२३वा२।
प्रवा यामु२। जिह्वा२ना२ः। प्रभानाऽ२३वा२ः। स२स्त्र२ते२
नाक२मच्छ२। इडाऽ२३भा२३४ऽ३। ओऽ२३४५यि५।
डा५॥ १०॥

ऋषिः—वत्सप्रीः॥ देवता—अग्निः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ २ ३ १ २
७४. प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम्।
१ २ ३ २ ३ १ २र ३ १ २ ३ १ २र ३ २
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम्॥

शुक्रम्—

१. प्र४भू५र्जा४यं५ना४म्४। म३हा२३४ऽ३म्३वि२पो३धा५म्५।
मू२रै२रमूरं पुरान्दॅर्म्माऽ२३णा२म्२। न३या२३४ऽ३न्त२ङ्गी३
र्भि५ः। व३ना२३४ऽ३धि२यं३धा५ः। ह४रि५श्म५श्रु५न्न४व४
र्म्म५णा५६। हा५उ५वा५। ध२ना२३र्च्चीऽ२३४५म्॥ ११॥

ऋषिः—भरद्वाजः॥ देवता—पूषा॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३ १ २ ३ १ २ ३१ २ ३ १ २र ३ १ २ ३ १ २
७५. शुक्रं ते अन्यद्यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि।
२ ३ २ ३ १ २र ३ १ २ ३२ ३ १ २
विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु॥

१. शु५क्रं४ते५अ५न्य४द्य५ज५त४म्४। त५आ५६न्या५त्५।
विषुरूपे अहनी द्यौः। ईंवाऽ२३सी२। वायिश्वाहिमायाअव-
सायि। स्वधा२३वा२न्२। भ२द्रा ते२। पू। षा२३निह। रा२ति३
र४स्तु५। ति४ रा४ऽ५स्तु५हा५उ५वा५॥ १२॥

ऋषिः—विश्वामित्रः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

७६. इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥

कौत्सम्—

१. इ५डा५म५ग्ना५यि५। पु२रु२दा२३। सं२ुस३नि४गो५ः। श४श्व४त्त४मं३ह३व४मा५ना५। य३सा३२३४धा५। स्यान्नस्सूनुस्तनयः। विजा२३वा२३। आ४ग्ने५सा४ता५यि५। सु३मा२३४ऽ३। ती२३ः। भू४तु४हा५उ५वा५। स्मा३२३४५यि५ ॥ १३ ॥

ऋषिः—वत्सप्रीः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

७७. प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते।
दधद्यो धायी सुते वयांसि यन्ता वसूनि विधते तनूपाः ॥

काश्यपे द्वे—

१. प्र४हो४ता५जा५ता४ः। म२हान्नभोविनृषद्माऽ२३सी३दा२त्२। अ२पां विवर्त्तायि। दधद्योऽ२३ धा२। या२यि२। सु२ते२व२यां सियं३ता२उ२। वा२। वासूनि२वि२ध२। ताऽ२ु। या३२३४अ५हो५वा५। त२नू२३पाऽ२३४५ः ॥ १४ ॥

२. प्र४हो४ता५जा५त४ः। उ५हु४वा४हा५यि५। माहा४२ुन्नाभो५२ु। वायिनृषद्मासीददपाम्विवाऽ२३र्त्ता२यि२। आअ२३हो२। इहा२। दाधा४२ुद्योधा४२ु। यायिसुतेवयांसियता-वसूऽ२३नी२। आअ२ ३हो२। इहा२। वि२ध२तायेर३। तनूऽ२ुपा३२३४अ५हो५वा५ह२ विष्मते३२३४५ ॥ १५ ॥

ऋषिः—वसिष्ठः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
७८. प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनामनुमाद्यस्य ।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥

घृताचेरांगिरसस्य सामम्—

१. प्र५सं५म्रा५जा५म्५ । अ२सु२रा२३ । स्या२ुप्र३ श४स्तां५म्५ । पुं२सष्कृष्टायि । ना२३मनु । मा२ुदि३य४स्या५ । इं२द्र२स्ये२ वा२३४ऽ३प्र२त२व३ । स२स्कृ३तॉनी५ । वं२दद्वारा२ वंदमा२ ना२ । विवाऽ२ुष्टू३२३४अ५हो५वा५ । वी३२३४ शा५ः ॥ १६ ॥

ऋषिः—विश्वामित्रः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
७९. अरण्योर्निहितो जातवेदा गर्भइवेत् सुभृतो गर्भिणीभिः ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३क २र ३ २
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥

भरद्वाजस्य प्रासहम्—

१. अ५र५ण्यो५ः । नि२हि२तो२जा२३४ऽ३त२वे३दा५ः । ग३र्भ४ इ४वे३त्सु३भृ४तो५ । ग५र्भि३णा३२३४यि४भी५ः । दि२ वेदिवईड्योजागृवाऽ२३द्भी२ुः । हा३२३४वि५ । ष्मा३२३४ द्भी५ः । म५नु५ ष्ये४ऽ५भि५र५ग्नि४ः । ए५हि५या५६हा५ । हो४ऽ५ । यी५ । डा५ ॥ १७ ॥

ऋषिः—पायुः ॥ देवता—अग्निः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
८०. सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अनु दह सहमूरान् कयादो मा ते हेत्या मुक्षत दैव्यायाः ॥

राक्षोघ्नम्—

१. अ३हा२ । वो२३हा२ । वो३२हा२ । स२नादग्नायि । मृ२णसि । या२तु३धा४ना५न्५ । न२त्वारक्षा । सी२३पृत । ना२सु३जि४ ग्यू५ः । अ२नुदहा । स२हमू । रा२न्क३या४दाः५ । अ३हा२ । वो२३हा२ । २ । मृ२तायिहे२त्याः । मु२क्षतद्दा२३४ऽ३यि३ । वी२३या४ऽ५या५६५६ः ॥ १८ ॥

[ इति ] दशतिः ॥

ऋषिः—गय आत्रेयः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

२ ३ १ २३ १ २ ३ २३ १ २
८१. अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
१ २ ३१ २र ३ २ ३ १ २३ १ २
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥

१. आग्ना२उओ३२३४वा५ओ२जि२ष्ठा२३मा । भारा२उओ३२३४ वा५ । द्यु२म्नमस्मभ्य२म२ध्रि२गो२३ । ओयि । प्राना२उओ३२३४ वा५ । रा२येपनी२य२से२३ । ओयि । रात्सा२उओ३२३४वा५ । वाजा२य२ पंथा३२३४५म्५ ॥ १९ ॥

२. अ४ग्ने४हा५उ५ । ओजि । ष्ठामा२ऽभारा२ । अ३हो३२३४वा५ । द्यु२म्नमस्म । भ्यामध्रीगा२ । अ३हो३२३४वा५ । प्रनो राये । पानी२ऽयासा२ । अ३हो३२३४वा५ । रात्सी४२२वाजा४२ । य२पोवा२३ओऽ२३४वा५ । था४ऽ५वो५६हा५यि५ ॥ २० ॥

ऋषिः—वामदेवः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
८२. यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः ।
३ १ २ ३ १ २ ३ १ २र ३ १ २
आजुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम् ॥

आ [ ा ] ग्नेयम्—

१. य३दि४वी४रो३अ३नु४र्ष्य५त्। ऐ२या२३४ऽ३ई२३४या५।
अ४ग्नि३मिं४धी५त५मौ। ५। होऽ३हा२३। होऽ२३४। त्तिं४या
४:। आजू४रुह्वाद्धाऽ२३। व्यमाऽरुनू३२३४षा५क्५। शर्म्म
भ२। क्षायि। त दा२३हा२३यि३। वा२३ओऽ२३४वा५। व्या
३२३४म्५॥ २१॥

ऋषिः—भरद्वाजः॥ देवता—अग्निः॥ छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

८३. त्वेषस्ते धूम ऋण्वति दिवि संच्छुक्र आततः।
सूरो न हि द्युता त्वं कृपा पावक रोचसे॥

यामम्—

१. त्वे२षास्तेऽ२३धू४म४ऽऋ४ण्व४ति४हा५उ५। दि२वि२सं२
शु२क्रा२३आताता२३:। सू४रो४न४ही४हा५उ५। द्यु२ता-
तूवा२३म्३। कृ४पा४प४वा४हा५उ५। क२रोचाऽ२३सा२
३४ऽ३यि३। ओ२३ ४५यि५। डा५॥ २२॥

ऋषिः—भरद्वाजः॥ देवता—अग्निः॥ छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

८४. त्वं हि क्षैतवद् यशोऽ ग्ने मित्रो न पत्यसे।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि॥

आग्नेयं बृहत्—

१. त्व४ं४हि४क्षै४त५व५द्य४श५:। ई४प५इ४या४हा५यि५।
अग्नायिमि२। त्रो। नाप२र्त्य३२३४सा५यि५। आअ२३४५हो५।
इ४या४हा५यि५। त्वंवि। चा। र्षणेऽरुश्रा३२३४वा५:।

आअ२३४होप्र । इ४या४हा५यि५ । वासा२३उ३वा२ । पु२ ।
ष्टायिम् । नापु२ष्या३२ ३४सी५ । आअ२३४हो५ । इ४या४
हा५ । हो४ऽ५यि५ । डा५ ॥ २३ ॥

ऋषिः—मृक्तवाहा द्वितः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

३ २३ १ २ ३ २ ३ १ २ ३ १ २
८५. प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः ।
२ ३ २ ३ १ २ ३ १ २र ३ १ २
विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते ॥

कौमुदस्य स [ ा ] मम्—

१. प्रा५त५र५ग्रा५यि५ष्पू५द्रु५प्रि५या५ः । वि२शास्त२वे२ताऽ
२३ । अ२ति३था२यि२ः । वायिश्वे यास्मी२३न्३ । अमाऽ२ु
र्त्ता३२३४या५यि५ । हव्याऽ२३ं३होयि । मर्त्ता२३हो । स२
इन्धाऽ२३ता२३४ऽ३ यि३ । ओ२३४५यि५ । डा५ ॥ २४ ॥

ऋषिः—वसूयव आत्रेयः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१ २र ३ २ ३ १ २ ३ १ २
८६. यद् वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
१ २ ३ २ ३ २उ ३ १ २
महिषीव त्वद् रयिस्त्वद् वाजा उदीरते ॥

यद्वाहिष्ठीये द्वे—

१. य४द्वा४हि५ष्ठं५त४दा४ । ग्रयायि । बृहदर्च्चं वि२भावाऽ२३
सा२ उ२ । माही४२ुषायिवा४२ु । त्वद्रयिः । त्वद्वाऽ२३जा२ः ।
उ२दीराऽ२३ता२३४ऽ३यि । ओऽ२३४५यि५ डा५ ॥ २५ ॥

२. य४द्वा४हि५ष्ठं५त४द५ग्न४ये५ । य५द्वा५हि५ष्ठो४वा५ । त२
दग्नयायि । बृहदा२३र्च्चा२ु । वि२भावसाउ । महिषाऽ२३
यि३वा२ । त्वद्रयिः । त्वद्वाऽ२३जा२ः । उ२दीराऽ२३ता२३४
यि३ । ओऽ२३४५ यि५ । डा ॥ २६ ॥

ऋषिः—गोपवनः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

८७. विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥

विशोविशीयम्—

१. विशोविशोहुं। वोअतिथायिम्। वाजयंताः। पूरूप्रीयारम्। अग्निंवो। दूरा याम्। हुंमायि। वाचाः। स्तूषेहायि। ओहुवायि। शू षा। हुम्मा। स्यामा। न्माभायि। एहियाहा। होयि। डा॥ २७॥

१. विशो विशो हुं। वो अतिथायिम्। वाजयंताः। पूरूप्रीयारम्। अग्निंवो। दूरायाम्। हुंमायि। वाचाः। स्तूषेहायि। ओहुवायि। शूषा। हुम्मा। स्यामा। न्माभायि। एहियाहा। होयि। डा॥ २७॥

ऋषिः—पूरुरात्रेयः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

८८. बृहद् वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः ॥

प्रजापतेश्च कनिनीके द्वे—

१. बृ५ह५द्व५या५ः। हि२भाना२३वा२यि२। आर्च्चादि२वा२। य२अग्ना२३या२यि२। यम्मित्रन्न। प्राशस्ता या४२युयि२। मर्त्तासो२३दा२३। धि४रोवा५। पू४५रो५६हा५ यि५॥ २८॥

२. बृ५ह५द्व५यो५हि५भा५ना५६वा५यि५। आर्च्चादि२वा२। य२ अग्ना२३या२यि२। यम्मित्र२न्न२। प्राशस्ताया४२युयि। मर्त्ता२ सो२द२। धायिरे२ऽपूरा२। अ ३हो३वा३हा२३४ अ५हो५वा५। वा२३हा२३४५ः॥ २९॥

ऋषिः—गोपवनः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

८९. अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥

श्रौतर्वणम्—

१. अ५ग५न्म५वृ५ । त्रा२३हान्ता२३मा२म्२ । ज्यायिष्ठ२म२ । ग्निमाना२३ वा२म्२ । यस्माऽ२३होयि । श्रु२तर्वन्नारक्षायि । बृहाऽ२३द्वोयि । आनीक२या२३ऽउवाये२३ । ध्या३२३४ ते५ ॥ ३० ॥

ऋषिः—वामदेवः, कश्यपो वा मारीचो मनुर्वा वैवस्वतः; उभौ वा ॥
देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

९०. जातः परेण धर्मणा यत् सवृद्भिः सहाभुवः ।
पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥

१. जा२त२ष्प२रे२णा२३धा । इ३हा२ । म२णा । इ३हा२ु । यो३२३४ नी५म्५ । योनिमिंद्रश्च२ग२छ२थ२ः । य२त्स२वृ२द्भि२स्सा२३हा । इ३हा२ । भु२वाः । इ३हा२ु । यो३२३४नी५म्५ । योनिमिन्द्रश्च२ ग२च्छ२थ२ः । पि२ता२य२त्क२श्या२३पा । इ३हा२ । स्या२ग्नायि । इ३हा२ु । यो३२३४नी५म्५ । योनिमिंद्रश्च२ग२च्छ२थ२ः । श्र२द्धा२ मा२ता२मा२३नूः । इ३हा२ । क२वायि । इ३हा२ु । यो३२३४नी५म् । योनिमिंद्रश्च२ग२च्छ२था३२३४५ः ॥ ३१ ॥

[ इति ] द्वितीयः प्रपाठकः ॥

ऋषिः—अग्निस्तापसः ॥ देवता—विश्वेदेवाः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

९१. सोमं राजानं वरुणमग्निमन्वारभामहे।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥

बार्हस्पत्यम्—

१. सोऽमप ःपराअजापनंपवअरुपणाअम्अ। अरग्निमन्वारभारमर
हे२३। होवा२३हा२यि२ आ२दि२त्यंविष्णु२ः२। सूर्य२म्२।
होवा२३हा२यि२। ब्र२ह्माणाऽ२३ञ्चा२३। होवा२३हा२यि२।
ब्रेहा३ॅउ३वा२३। पा३२३४तीपम्प ॥ १ ॥

ऋषिः—वामदेवः ॥ देवता—अङ्गिराः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

९२. इत एत उदारुहन् दिवः पृष्ठान्या रुहन्।
प्र भूर्जयो यथा पथोद् द्यामङ्गिरसो ययुः ॥

यामम्—

१. आरो३ॅहा२न्२। ३। इ२त२ए२त२ऊ२३दारू२ऽहा४२ु न्२।
दि२व२ष्पृ२ष्ठा२नी२३यारू२ऽहा४२ुन्२। प्र२भू२र्ज्ज२यो२
या२३था पा२ऽथा४२ु। उ२द्या२म२ङ्गि२रा२३सो या२यू४२ुः।
आरो३ॅहा२न्२। २। आऽ२३रोऽ२ु। हा३२३४। औ५हो५वा५।
ऊ३२३४पपॅ ॥ २ ॥

ऋषिः—काश्यपोऽसितो देवलो वा ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥
स्वरः—गान्धारः ॥

९३. राये अग्ने महे त्वा दानाय समिधीमहि।
ईडिष्वा हि महे वृषं द्यावा होत्राय पृथिवी ॥

१. रा५ये५अ५ग्ने५म५हा४यि४ त्वा। दानाय समिधीमाऽ२३हीर।
आयिडी४रुष्वाही४रु। म२हे वृषन्। द्यावा४रुहोत्रा४रु। य२
पोवा२३ओऽ२३४वा५। था४ऽ५यि५वा५६हा५यि५।५॥३॥

२. रा२याया ऽ२३ग्ने४म४हे४त्वा४हा५उ५। दानाय समिधीमाऽ२३
हा२यि२। आइडायिष्वा२३हा२३यि३। माहे२ुवा३२३४ऋ४
षा५न्५। द्यावा हो२३त्रा२३। य२पोऽ२३४वा५। था४ऽ५यि५
वो५६हा५यि५॥४॥

ऋषिः—सोमाहुतिर्भार्गवः॥ देवता—अग्निः॥ छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

३ २ ३ २ ३ २ ३ २ ३ २उ ३ २३ २
९४. दधन्वे वा यदीमनु वोचद् ब्रह्मेति वेरु तत्।
२ ३ १ २ ३ १ २ ३ २ ३ १ २
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत्॥

त्वाष्ट्री साम—

१. दऽ४ध४न्वे४वा४ऽ५य५दी५म४नू४। वोचद्ब्रह्मेतिवेरुतत्।
पारिविश्वा४रु। नि२का व्या। नायिमिश्चक्रौ२वा२ु। ई३२३४
वा५। भु२वात्। अऽ२३हो४वा५। हो४ऽ५यि५। डा५॥५॥

ऋषिः—पायुः॥ देवता—अग्निः॥ छन्दः—अनुष्टुप्॥ स्वरः—गान्धारः॥

१ २३ १२ ३ १२ ३ २ ३ २ ३ १ २
९५. प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि।
३ १ २ ३ २ ३ २ ३क २र ३क २र
यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम्॥

अगस्त्यम्—

१. प्र३त्य४ग्ने५। हो२ुयि२ु। ह३र४सा४ह४रा५६ए५। शृ२णाहि२
वाऽ२ुयि२ु। श्व३ता२३४५ः। पा३२३४री५। या२तु२धानस्य२
र२क्षसो३। बाऽ२३ला२म्२। नियुब्ज२वोऽ२३४वा५। री३२
३४या५म्५॥६॥

ऋषिः—प्रस्कण्वः ॥ देवता—अग्निः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१ २ ३ १ ३ ३ २ ३ १ २ ३ ३ ३ २
९६. त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
१ २ ३ २उ ३ १ २ ३ १ २
यजा स्वध्व रं जनं मनुजातं घृतप्रुषम् ॥

मानवम्—

१. त्व४म५ग्ने५ । त्व४म५ग्ना४यि४ । व२सूः२रिहा । रुद्राः२आऽ२३ दी२ । ति२या२उता । यजासूऽ२३वा२ । ध्व२रं जनम् । मनुजाऽ२३ता२म्२ । घृ२त२प्रुष२म्२ । इडाऽ२३भा२३४ऽ३ । ओऽ२३४५यि५ डा५ ॥ ७ ॥

ऋषिः—दीर्घतमाः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

३ १ २ ३ १ २ ३ १२ ३ १ २ ३ २
९७. पुरु त्वा दाशिवाँ वोचेऽ रिरग्ने तव स्विदा ।
३ १ २ ३ २उ ३१ २
तोदस्येव श र ण आ महस्य ॥

तौदे द्वे—

१. पु५रु४ । त्वा२दाशिवाङ्वोचाये२३ । आ४री५रा४ग्रा५यि५ । ता२वस्विदा । तो२दस्येव शरण आऽ२३होयि । महाऽ२३ होये२३ । स्यो२ । या३२३४अ५हो५वा५ । ई३२३४५ ।५ ॥ ८ ॥

२. पु५रु४त्वा५दा५शि५वा४ । ङ्वो५चे५ । आ२री२रा३२३४ग्रा५ यि५ । ता२व२स्वा३२३४यि४दा५ । तो४द३स्ये४व५श५र५ । ण३यो३२३४हा५यि५ । मा३ऽहा२ऽ३ । हुंमाये२३ । स्योऽ२ । या३२३४ अ५हो५वा५ । ई३२३४५ ॥ ९ ॥

दैर्घतसानि त्रीणि—

३. पु५रु४त्वा५दा५शि५वा४ङ्वो५ । चे५चे५[1] । अ२रायिराऽ२३४ ग्रा५यि५ । ता२व२स्वा३२३४यि४दा५ । तो२दास्याऽ२३४यि४

१. अत्र 'चे५' इत्यधिकं प्रतीयते मूलगानग्रन्थे । —सम्पादकः

वा५। शा२रा२ुणा३२३४या५। मा२३हा४ऽ५स्या५६५६।
ए२३ऽ॥ १०॥

४. पु५रु५त्वा२३दा४शि५वा४ङ्वो४चे५। अ२रिर। ग्रायि। तवाऽ२ुस्वा३२३४यि४दा५।तो३२३४दा५।स्या३२३४यि४वा५। शा२रा२ुणा३२३४या५।मा२३हा४ऽ५स्या५६५६॥ ११॥

५. पु२रुत्वाऽ२३दा४शि४वा४ङ्वो४चे४हा५उ५।हा२ु।अ३होऽ३ हा२ु।ओ३२३४वा५।अ२रिरग्रे२तवस्वि२दा।हा२ु।अ३होऽ३ हा२ु।ओ३२३४वा५।तो२दस्ये२व२श२र२णआ।हा२ु।अ३ होऽ३हा२ु।ओ३२३४वा५।ए२३।म२हस्या३२३ ४५॥ १२॥

ऋषिः—विश्वामित्रः॥ देवता—अग्निः॥ छन्दः—उष्णिक्॥ स्वरः—ऋषभः॥

१८. प्र होत्रे पूर्व्यं वचोऽ ग्नये भरता बृहत्।
विपां ज्योतींषि बिभ्रते न वेधसे॥

१. प्र५हो५त्रे५पू५।र्व्वि२यं वचो।अग्नयाऽ२३यि३भा२।र२ता-बृहत्।विपाञ्ज्योऽ२३ती२।षि२[१]बाये२३।भ्राऽ२ुता३२३४ अ५हो५वा५।न वे२धसे३२३४५॥ १३॥

२. प्र५हो५त्रा२३यि३पू४र्व्वि५यं४व४चा५ः। अ२ग्नये२भरता३ बे२।हाऽ२३त्३।वि२पा३ज्यो३ता२ुयि२ु।षी३२३४[२]बि५। भ्र३ता२३यि३। नाऽ२३वे४ऽ३। धाः२३४५सो५६हा५ यि५॥ १४॥

---

१. मूलपाठेऽत्र 'वा' इति लिखितम्।
२. मूलपाठेऽत्र 'वि' इति लिखितम्। —सम्पादकः

ऋषिः—गोतमः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

९९. अग्ने वाजस्य गोमत ईशानः सहसो यहो।
अस्मे देहि जातवेदो महि श्रवः ॥

प्रजापतेः श्रुधीये द्वे—

१. अ४ग्ने४वा४जा४ऽ५स्य५। गो५म५तो४वा४। ई२शा। न२स्सा ह२ सो३य२हो। अ२स्मायिदे२हि२जातवे२दो२म। हाऽ२३ यि३। श्र३वा२उ२वा२। श्रूधिया४२ु। एऽ२३हि३या२३४ऽ३। ओऽ२३४५यि५। डा५ ॥ १५ ॥

२. अ५ग्ने५वा५ज५स्य५गो५हुं५। म५तो४हो४हा५यि५। ई२शान२ स्सा। हासो२ुया३२३४हो५। आस्मे२ऽदायिही२३। जा४त५। वे३दा२३ः। माऽ२३ही४ऽ३। श्रा२३४५वो५६हा५यि५ ॥ १६ ॥

ऋषिः—विश्वामित्रः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१००. अग्ने यजिष्ठो अध्वरे देवां देवयते यज।
होता मन्द्रो वि राजस्यति स्रिधः ॥

प्रजतेः सदो हविर्धानानि त्रीणि—

१. अ५ग्ने५य५जि५ष्ठो५अ५ध्व५रा५६ए५। दे२वा२न्दे२व२। या२३तायिया२ऽजाऽ२ु। हु३वा२३। हो३ँवा२। होतामं२द्र२ः। वि२राजा२ऽसीऽ२ु। हु३वा२३हो३ँवा२। अ२तिस्रा‍ऽ२३यि३ धा२३४ऽ३ः। ओऽ२३४५यि५। डा५ ॥ १७ ॥

२. अ५ग्ने५। इ२या२३४ऽ३ई२३४या५यजिष्ठो अध्वरायि। देवान्देवयते४२ु। हौहो४२ु। याजा४२ु। होता४२ु मान्द्रो४२ु।

विराजा२३सी२। आ५२। ति३या२३४अ५हो५वा५। स्त्री३२ ३४धा५:॥ १८॥

३. अ५ग्न५ई४या५। ओ४वा५। यजिष्ठोअध्वरायि। देवान्दा५२३ यि३वा२। याते२ऽयाजा४२। होता२३उ३वा२। मं२द्रो२वी२३ रा५२३। जा५२सा३२३४अ५हो५वा५। अति२स्त्रिधा३२३ ४५:॥ १९॥

ऋषि:—त्रित:॥ देवता—पवमान:॥ छन्द:—उष्णिक्॥ स्वर:—ऋषभ:॥

३ २ ३ २ ३ १ २ ३ १ २र ३ २
१०१. जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये।
३ २ ३ १ २ ३ १ २ ३ २
अयं ध्रुवो रयीणां चिकेतदा॥

१. ज५ज्ञा५न५स्सा५। स२मा२। त्तृभायि:। मेधा२मा३२३४शा५। स२त२श्रायायि। अँया५२। ध्रू३२३४वा५:। रया५२३यि३ णा२म्। चिकाये२३। ता५२दा३२३४अ५हो५वा५। ऊ३२३४ पा५॥ २०॥

ऋषि:—इरिम्बिठि:॥ देवता—अदिति:॥ छन्द:—उष्णिक्॥ स्वर:—ऋषभ:॥

३ २उ ३ १ २ ३ १ २र ३ १ २
१०२. उत स्या नो दिवा मतिरदितिरूत्यागमत्।
१ २र ३ १ २ ३ २ ३ १ २
सा शन्ताता मयस्करदप स्त्रिधः॥

अर्कजभम्—

१. उ५त५स्या२३नो४५दि५वा४म४ती५:। आदिति२रू२। ति२ यागा२ऽमा४२त्२। साशंता२३ता२३। मा४। य५:। क३ रा२ओ३२३४वा५। अ४प४५५स्त्रि५धा५:। हो४५५यि५। डा५॥ २१॥

ऋषिः—विश्वमना वैयश्वः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१०३.ईडिष्वा हि प्रतीव्यां३ यजस्व जातवेदसम्।
चरिष्णुधूममगृभीतशोचिषम्॥

अगस्त्यस्य च राक्षोघ्नम्—

१. ई२डायिष्वाऽ२३हि४प्र४ती५वि५या५म्५। याजस्व२ जा। त२वे३द२साऽ२३म्३। च२रि३ष्णु३धू२। मा३२३४म५। गृ३ भा२३यि३। ताऽ२शो३२३४अ५हो५वा५। ची३२३४ षा५म्॥ २२॥

ऋषिः—विश्वमना वैयश्वः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१०४.न तस्य मायया च न रिपुरीशीत मर्त्यः। यो अग्नये ददाश हव्यदातये॥

१. न५तो४वा४। स्या३२३४मा५। य२या चाऽ२३ना२। रि२ पुरीशीत२मा२३ऽउवाऽ२३। ती३२३४या५ः। योअग्नये२ँद२ दा। श हव्यदोऽ२३४वा५। ता३२३४ये५॥ २३॥

ऋषिः—ऋजिष्वा भरद्वाजः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

१०५.अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम्।
दविष्ठमस्य सत्पते कृधी सुगम्॥

अगस्त्यस्य च राक्षोघ्नम्—

१. अ३प४त्यं३वृ४जि५न५म्५। रि३पू२म्२। स्ते२ना३२३४५म्५। अ२ग्ना२यि२। दु२राधाऽ२३या२३४म्४। द३वि४ष्ठ५म५स्य५ स५त्५। प३ता२३यि३। काऽ२३र्द्धी४ऽ३। सू२३४५४गो५६ हा५यि५॥ २४॥

ऋषिः—विश्वमना वैयश्वः ॥ देवता—अग्निः ॥ छन्दः—उष्णिक् ॥ स्वरः—ऋषभः ॥

३क २र ३ १ २ ३ १ २
१०६. श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते।
२ ३ २ ३ १ २ ३ १ २
नि मायिनस्तपसा रक्षसो दह॥

१. हा५उ५श्रु५ष्ट्य५ग्ने५न५व५स्य५मे५हा५उ५। स्तो२मास्य२ वायि। र२वि२श्पताये२३४। ऐ५ही५हा५उ५हो४वा५। नि२ मा२यिनाः। त२पसा२राऽ२३४। ऐ५ही५हा५उ५हो४वा५। क्षासाऽ२३४ः। ऐ५ही५हा५उ५हो४वा५। द२ह२ए२३४। हि५या५६हा५। हो४ऽ५यि५। डा। ५ ॥ २५ ॥

ऋषिः—प्रयोगो भार्गवः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

१ २र ३ १ २ ३२ ३ १ २ ३ १ २ ३ १ २
१०७. प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे। उपस्तुतासो अग्नये॥

इन्द्रस्य प्रमाꣳहिष्ठीयानि चत्वारि—

१. प्र५म५ꣳ५हा२३यि३ष्ठा४य४गा५य५ता५। ऋ२ताव्ने४२ु। बृहते शुक्रा२३शो४ऽ३। चा३२३४यि४षा५यि५। उ२पाअ२३ हो२। स्तोतासो२३आ४ऽ३। ग्ना२३४५यो५६हा५यि५ ॥ २६ ॥

२. प्र४मꣳ४हि५ष्ठा५य५। गा४ऽ५य५ता४। ऋ२ता४२ुऽ२ऽ। व्ने४२ु। बृ२हाता२ऽयिशू४२ु। क्र२। शोचाऽ२३यि३षा२यि२। उ२प२। स्तुतौ४२ु। हुवायि। हो३वा२३। स२ओऽ२३४वा५। ग्ना४ऽ५ यो५६हा५यि५ ॥ २७ ॥

३. प्र३म३ꣳ३हि४ष्ठा५य५गा५। इ२या२३४ऽ३ई२३४या५। यतऽ ऋताव्नेबृहते शुक्र२शौ४२ु। हौ४२ु। हुवा४२ुयि२। चायिषा४२ु यि२। उपा२३होयि। स्तुता२३होसो२अग्नाऽ२३या२३४ऽ३ यि३। ओऽ२३४ऽ५यि५। डा५ ॥ २८ ॥

४. प्र४म४ꣳ४हि५ष्ठा५य५गा५य५त५ । प्र५म५ꣳहि५ष्ठो४वा५ । यागायरतर । ऋता ऽ२३न्ना२३४ । यि४ । बृ४ह४ते३शु४क्र४ शो५ । चा२३यि३षा२यि२ । उ२पौ२हो२वा२३हा२यि२ । स्तु२तौ२ हो२वा२३हा२३ । स२ओ ऽ२३४वा५ । ग्रा४ऽ५यो५६हा५ यि५ ॥ २९ ॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

१०८. प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।
यस्य त्वं सख्यमाविथ ॥

भरद्वाजस्य वा—

१. प्रासो२३हा२यि२ । आग्ने२३हा२यि२ । त२वा२३ऽउवा ऽ२३ । ती३२३४भि५ः । सु२वीराभि२स्त२र२ति२वाजक२र्म्म२भि२ः । यास्या२३हा२यि२ । त्वाꣳसा ऽ२३ । ख्य४मो४वा५ । वा४ऽ५ यि५थो५६हा५यि५ ॥ ३० ॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

१०९. तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे । देवत्रा हव्यमूहिषे ॥

सौभराणि त्रीणि—

१. तं५गू४ऽ३र्द्धा२३या४सु४व५र्ण५रो४वा५ । दे२वासोदेवमरा४ रुतायिं दैधा ऽ२३ । हो । न्वा३२३४यि४रा५यि५ । दे२व२त्राहा । व्यमू३हा२३ । हा ऽ रुयि रुषा३२३४अ५हो५वा५ । ऊ३२३ ४५ ॥ ३१ ॥

२. तं५गू५र्ध्द५या५सु५व५र्णा४रा५म्५। दे२वासो२दायि। व२म३ र२ता२३यि३म्३। द२ध३न्वि३रा२। उ२वा२३। दे३२३४ वा५। त्रा२हा२३। व्य४मो४वा५। हा४५यि५षो५६हा५ यि५॥ ३२॥

३. तं५गू५र्ध्द५या५स्वौ५हो४र्णा४रा५म्५। देवा२सो३२३४दे५। वमरता२यि२म्२। दा३२३४धा५। न्वा३२३४यि४रा५। यि५। हा२हो३२३४हा५। देवा२त्रा३२३४हा५। व्य३मू२३ हा४५यि५। षा३२३४५यि५॥ ३३॥

ऋषिः—प्रयोगो भार्गवः; सौभरिः काण्वो वा॥ देवता—अग्निः॥
छन्दः—ककुबुष्णिक्॥ स्वरः—ऋषभः॥

१ २ ३ १ २ ३ १ २३ १ २ ३ २ ३ २
११०. मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः।
२ ३ १ २ ३२
यः सुहोता स्वध्वरः॥

सौभरस्य सामनी द्वे—

१. मा४। ना४ः। हृ२णी३ऽथाऽतिथी२३म्३। वासू२रा३२३४ ग्नी५ः। पु२रौ२हो२वा२३हा२यि२। प्र२शौ२हो२वा२३हा२३। स्त२ओ२३४वा५। आ४५यि५षो५६हा५यि५॥ ३४॥[1]

२. मा४नो४हा५उ५। हा२३४। र्णी४था४अ३ति४थि५म्५। वा२ सू२रा३२३४ग्ना५यि५ः। पु२रौह२होयि। प्र२शौह२हो। स्ता२ ३४ए४षा४ः। ए५हि५या५६हा४। हौ४५यि५। डा५॥ ३५॥[1]

---

१. मन्त्रोक्तस्य 'यः सुहोता स्वध्वरः' इत्यस्य पादस्य गानं मूलपाठे न विद्यते। —सम्पादकः

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३२
१११. भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
३ २ ३ १ २र
भद्रा उत प्रशस्तयः ॥

दैवानीकम्—

१. भ४द्रो३ऽ४न५ः । हो२यि२ । अ३ग्नि४रा४हु४ता५६ए५ । भ३ द्रा३रा२तायिः । सु२भगाभा२३ । द्रोऽ२ध्वा३२३४रा५ः । भ२ द्राऊऽ२३ता२३ । प्राऽ२३शा४ऽ३ । स्ता२३४५यो५६हा५ यि५ ॥ ३६ ॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

१ २ ३ १ २ ३ १ २र ३ १ २
११२. यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥

गौतामम्—

१. या३ऽ५जि५ । ष्ठं५त्वा४ऽ३वा२३वृ४म४हा५यि५ । दे२वंदेवत्रा होताऽ२३रा२म्२ । आमर्त्ति२य२म् । आस्यैं याज्ञाऽ२३ । स्याऽ२३ सू४ऽ३क्रा२३४५तो५६हा५यि५ ॥ ३७ ॥

ऋषिः—सोभरिः ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

१ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
११३. तदग्ने द्युम्नमा भर यत्सासाहा सदने कं चिदत्रिणम् ।
३ १ २र ३क २र
मन्युं जनस्य दूढ्यम् ॥

जमदग्नेः सांवर्गम्—

१. त४द४ग्ने४द्यू४ऽ५म्नं५ । आ५भ५रो४वा४ । य२त्सासाऽ२३हा२ । सदाऽ२३ना२यि२ । कं२चि२दत्राऽ२३यि३णा२म्५ । मान्युञ्-

नस्य दूऽ२३होऍ। ढाऽ२३४या४म्४। एृ५हि५या५६हा५।
हो४ऽ५यि५।डा५॥ ३८॥

ऋषिः—विश्वमना: ॥ देवता—अग्निः ॥ छन्दः—ककुबुष्णिक् ॥ स्वरः—ऋषभः ॥

११४.यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे।
विश्वेदग्निः प्रति रक्षांसि सेधति॥

१. यर्द्वाऊऽ२३वि४श्प४ति५शि५ता५:।सुप्रीतो२मनुषो२वि२
शे।विश्वायिदाऽ२३ग्नी२:।प्रति२रक्षाऽ२ु।सि३से३ध२ता।
अर३ इहो४वा५।हो४ऽ५यि५।डा५॥ ३९॥

[ इति ] आग्नेयं पर्व्व, अर्द्धप्रपाठकः॥

[ इति प्रथमोऽ ध्यायः॥ १॥ द्वादशः खण्डश्च॥ १२॥ ]

# [ अथ ] ऐन्द्रं पर्व

ऋषिः—शंयुर्बार्हस्पत्यः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३१ २र ३ २ ३ १ २ २उ ३ २ ३ १ २
११५. तद्वो गाय सुते सचा पुरुहूताय सत्वने। शं यद्गवे न शाकिने॥

रौद्रे द्वे—

१. त५द्वौ५हो४वा५। गायाऽ२ु। सु३ता२ुयि२ुसा३२३४चा५। पुरुहू२ता२। य२सात्वा२ऽना४२ुयि२। शंयत्। हा। अ२३ हो२ुयि२ु। गा३२३४वा५यि५। नाऽ२ुशा३२३४अ५हो५वा५। ए२३। किनेऽ२३४५॥ १॥

२. त५द्वो५गा५या५। सु२ता२ुयि२ुस२चा२३। पूरूऽ२३हू३ ता२३४। हा३हो२३। या स२त्वा३२३४ना५यि५। शं२यद्गाऽ २३वे२। न२शौ४२ु। हौ४२ु। हुवोऽ२३४वा५। का४ऽ५यि५ नो५६हा५ यि५॥ २॥

मार्गीयवे द्वे—

३. त५द्वो५गा५य५सु५ते५स५चा५६ए५। पु२रु२हू२ताय सत्वने२। पुरुहू२ता२। यासँत्वाऽ२३ना२३४यि४। शं४य५त्५। गौ२वा२ुओं३२३४वा५। नाऽ२३शा४ऽ३। का२३४५यि५ नो५६हा५ यि५॥ ३॥

४. त५द्वो५गा५य५सु५ते५स५चा५६ए५। पु२रु२हू२ताय सत्व-नायि। शंयद्गाऽ२३वे२। ऐ४२ुहो२ऽआऽ२३यि३ही२। न२ शाऽ२३। काऽ२ुयि२ुना३२३४अ५हो५वा५। इ३२३ ४५॥ ४॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३१ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३१ २र
११६.यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः। तेन नूनं मदे मदेः ॥

१. य४स्ते४नू४ना४ऽ५ २ं५श५त५क्र४ता४उ४। इंद्रद्युम्नितमो मा४२ुदाः। ते२ननूनाऽ२३म्मा२। दायिमौं३उँ३वा२३। दे३२ ३४५ः॥५॥

ऋषिः—हर्यतः प्रागाथः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ १ २ ३२ ३ २ ३१ २ ३ १ २ ३ १ २र ३ १ २
११७.गाव उप वदावटे मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥

मैटते द्वे—

१. गा४व५ः। ए४गा४वा५ः। उ२प२व२। दा२३। वाऽ२ुदा३२३४ अ५हो५वा५। वा३२३४टे५। म२ही२ुया३२३४ज्ञा५। स्य३ रा२३। स्याऽ२ुरा३२३४अ५हो५वा५। प्सू३२३४दा५। उ२भा२ु का३२३४र्णा५। हि३रा२३हाऽ२ुयि२ुरा३२३४अ५हो५वा५। ण्या३२३४ या५ ॥ ६ ॥

२. ओ२ुयि२ुगा३२३४वा५ः। उ२प२वा२३दा। वादा२ुओ३२३४ वा५। म२ही[1]यज्ञस्य२र२प्सुदा२३। ओ२ुऊ३२३४भा५। कार्णा२ुओ२३४वा५। हि२र२ण्ययाऽ२३४५ ॥ ७ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २ २ ३ १ २ ३ १ २
११८.अरमश्वाय गायत श्रुतकक्षारं गवे। अरमिन्द्रस्य धाम्ने ॥

श्रौतकक्षे द्वे—

१. अ३रा२३४म्४। अ४श्वा४य४। गा५या५द्ता५। श्रूतक२ क्षा३। राङ्गावा२ुयि२ु। आ३२३४रा५म्५। हा२३हा२यि२। इ।

१. मूलग्रन्थेऽत्र 'यज्ञस्य' इत्यस्य स्थाने 'जँज्ञस्य' इति लिखितम्। —सम्पादकः

द्रास्याऽ२३धा२ । हुम्माये२३ । म्नो२ु । या३२३४अ५हो५वा५ । ई३२३४ति५ ॥ ८ ॥

२. अ४र५म४श्वा५य५गा५य५ता५ । र५म५श्वो४वा५ । या गा़य२ त२ । श्रुत२क२ । क्षाऽ२३ । हा२३हा२३यि३ । आराऽ२ुङ्गा३२ ३४वा५ । यि । आरमिंद्रा२३ । हा२३हा२ । स्याधा२म्ना । अ२३हो४वा५ । हो४ऽ५यि५ । डा५ ॥ ९ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २र ३२ ३ २ ३ १ २ १ २र ३ १ २
११९.तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥

तन्वस्य पार्थस्य सामनी द्वे—

१. त२मिंद्राऽ२३म्वा४ज४या५म५सि५ । माहेवृ२त्रा२ । य२हान्ता२ ऽवे४२ु । स२वाऋषा२ऽवाऽ२३ । ष२भोऽ२३४वा५ । भू४ऽ५ वो५६हा५यि५ ॥ १० ॥

२. त२मिंद्राऽ२३म्वा४ज४या४म४सि४हा५उ५ । माहेवृ२त्रा२ । य२ हान्ता२ऽवेऽ२३ । होवा२३हा२यि२ । स२वाऋषा२ऽवाऽ२३ । होवा२३हा२ । ष२भोऽ२३ । भूऽ२ुवा३२३४अ५हो५वा५ । ए२३ । दा२वसू३२३४५ ॥ ११ ॥

वासिष्ठम्—

३. त५मिं५द्रं५वा५ज५या५म५सी५६ए५ । म२हा२३हा२यि२ । वृ२त्रा३ॅयाँहन्तवे४२ु । ओ४२ु । ई४२ु३ॅया२ । ओमोवा२ । स२ हे२ वारिषा४२ु । ओ४२ु । ई४२ु । ३ॅया२ । ओमोवा२ । वृ२ष२ । भोऽ२ु । या३२३४अ५हो५वा५ । भू३२३४वा५त्५ ॥ १२ ॥

इडानाꣳसंक्षारः—

४. अ२हो२यि२हु२वा२३होयि। त२मिं२द्रं२वा२३जा४ऽ३या२ुम३ सि५। अ२हो२यि२हु२वा२३होयि। म२हे२वृ२त्रा२३या४ऽ३ हं२ुत३वे५। अ२हो२यि२हु२वा२३होयि। स३वा२ुऋ२ुषा३२ ३४वृे५। ष२भो२भु२व२त्२। इडाऽ२३भा२३। ए४ही४डा५। हो४ऽ यि५। डा५॥ १३॥

ऋषिः—इन्द्रमातरो देवजामयः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१२०. त्वमिन्द्र बलादधि सहसो जात ओजसः। त्वं सन्वृषन्वृषेदसि॥

सार्यात्तानि त्रीणि—

१. हा५उ५त्व५मिं५द्रा५। ब२लादधि२। हा२३उ३हा२उ२। सहसो२जा२। ताओ२ऽजसा२३ः। हा२३उ३हा२उ२। त्वाꣳ सन्वृषा२३न्३। हा२३उ३हा२उ२। वृ२षाये२३त्३। आऽ२ु सा३२३४अ५हो५वा५। वृ२धे२ऽऽ॥ १४॥

२. त्व५मिं५द्र५ब५ला५द५धी५६ए५। सहसो२जा२। ताओ२ऽ जस२ुः। इ३या२३होयि। इ३या२ुयो३२३४वा५। त्वाꣳसन्वृष२ न्। इ३या२३होयि। इ३या२ु३यो३२३४वा५। वृ२षाये२३त्३। आऽ२ु सा३२३४अ५हो५वा५। म२हे२ऽऽ॥ १५॥

३. त्व५मिं५द्र५ब४ला५द४धि५स४ह५सा४। जाता४२ुः। ओज साऽ२३४ः। इ४हो५इ५हा४। त्वाꣳसन्वृषा२३४न्४। इ४हो५ इ५हा४। वृ२षाये२३त्३। आऽ२ुसा३२३४अ५हो५वा५। ई३२ ३४हा५॥ १६॥

ऋषिः—गोषूक्त्यश्वसूक्तिनौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ १ २र ३ २उ ३ १ २ ३ १ २ ३ २ ३ २

१२१. यज्ञ इन्द्रमवर्धयद् यद्भूमिं व्यवर्तयत्। चक्राण ओपशं दिवि ॥

इन्द्राण्याः साम—

१. य५ज्ञ५इं५द्र५म५व५र्द्धा५६या५त्५। य२द्भूमिम्। व्या५। व्यँवाऽ२ र्त्ता२३४या५त्५। चा३२३४क्रा५। णा३२३४ओ५। पाशं२दि२वि। च२क्रा३ण२ओऽ२३। पाऽ२शाँ[1]३२३४अ५ हो५वा५। दी३२३४वि५॥ १७॥

ऋषिः—गोषूक्त्यश्वसूक्तिनौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३२उ ३ १ २र ३ २ ३ २ ३ २ ३ २ ३ १ २

१२२. यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्। स्तोता मे गोसखा स्यात् ॥

गौसूक्तम्—

१. य४दिं५द्रा५हं४य४थौ५। हौ४हो४वा४हा५यि५। तु५वा४म्४। ई२शीयवस्व२अ४२। हुवायि। हुवाये२। काई४२। त्२। स्तो२ता मे गो स२खौ४२। हुवायि। हुवाये२। साया ऽ२३त्३। होऽ२३२३४अ५हो२वा५। अ२ग्निराहु२ता३२३४५:॥ १८॥

आश्वसूक्तम्—

२. आ२अ३हो४वा४। हा५यि५। य५दिं५द्रा५हा५म्५। य२था। त्वम्। ऐ२ही२यै३ही२ऽ। आयिशीय२व२स्व२[2]आयिकईत्। ऐ२ही२यै३ही२ऽ। आ४२यि२। स्तोता४२मायिगो४२। स२ खाऽ२३। साऽ२या३२३४ अ५हो५वा५। [3]शु२क्रआहु२ता३२ ३४५:॥ १९॥

---

१. मूलग्रन्थेऽत्र 'साँ' इति लिखितम्। २. मूलग्रन्थेऽत्र 'श्व२' इति लिखितम्।
३. 'शुक्र आहुत' इत्यधिकः पाठः। —सम्पादकः

ऋषिः—मेधातिथिराङ्गिरसः प्रियमेधः काण्वश्च ॥ देवता—इन्द्रः ॥
छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
१२३.पन्यंपन्यमित् सोतार आ धावत मद्याय। सोमं वीराय शूराय ॥

गौवितम्–

१. प४न्यं५प५न्य५मि४त्४। सो५ता५६रा५ः। पन्यं पन्यमित्सो२ऽ
ता२३राः२। आ। धा२व२त३। म२दि३या४या५। सोमं वी२।
राऽ२३। य३शू२३रा४ऽ५या५६५६ ॥ २० ॥

ऋषिः—मेधातिथिराङ्गिरसः प्रियमेधः काण्वश्च ॥ देवता—इन्द्रः ॥
छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
१२४.इदं वसो सु तमन्धः पिबा सुपूर्णमुदरम्। अनाभयिन् ररिमा ते ॥

गाराणि त्रीणि–

१. इ५दं५व५सा५उ५। सु२त४। माऽ२३न्धा२ः। पिबा२ॅसु२पू२।
ण२ मुदाऽ२३रा२३४म्४। अ३ना२३४भ३या२३यि३न्ऽ३।
र४रो४ वा५। मा४ऽ५तो५६हा५यि५ ॥ २१ ॥

२. इ५दा४ऽ३म्३व२सो३सु४त४मं४धाः५। पि२बासूऽ२३पू२३।
णमूऽ२ुदा३२३४रा५म्५। आऽ२३ना२। भा४२ुयायिन्। रराँऽ
२३। हा२उ२वा२३। माते३२३४५ ॥ २२ ॥

३. इ५दं५व५सो५सु५त५मं५धा५६ए५। पि२बा२सु२पू३ॅर्णामुँदरौ
२। हो२३वा२। पिबासुपूर्णामूँदरौ२। हो२३वा२। आनाभा२३
यी२न्२। ररिमा२ताअ२३हो४वा५। हो४ऽ५यि५। डा५ ॥ २३ ॥

ऋषिः—सुकक्षश्रुतकक्षौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२उ ३ २ ३ १ २ ३ १ २र १ २
१२५.उद् घेदभि श्रुतामघं वृषभं नर्यापसम्। अस्तारमेषि सूर्य ॥

सौपर्णानि त्रीणि—

१. उ५द्घे५द५भ्यो४वा५ । श्रूता२मा३२३४घा५म्५ । वृ२षाभ२
न्ना । रिँया२रुपा३२३४सा५म्५ । आ४रुस्ताराऽ२३मे२ । षायिसू
२रि२या । अ२३हो४वा५ । हो४ऽ५यि५ । डा५ ॥ २४ ॥

२. उ५द्घे५द५भि५श्रु५ता५मा५६घा५म५म्५ । वृ४ष४भ३न्न४
र्या५ । हुं । पा३२३४सा५म्५ । आस्ता२३उ३वा२ । रा२मायि ।
षि२सूऽ२ ३४वा५ । रा४ऽ५यो५६हा५यि५ ॥ २५ ॥

विलम्बसौपर्णम्—

३. उ४द्घे४द५भि४श्रु५ता४म५घ५म्५ । ई४य५इ४या४हा५यि५ ।
वृ४ष४भ३न्न४र्या५ । हा२३हा२३यि३ । पऽ२३४सा५म्५ ।
आस्ता२३उ३वा२३ । राऽरुमा३२३४अ५हो५वा५ । षि२सू२
रि२या३२३४५ ॥ २६ ॥

ऋषिः—सुकक्षश्रुतकक्षौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ १ २र ३ १ २ ३ १ २ २ ३ १ २ ३ १ २
१२६. यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशे ॥

साकालम्—

१. ध४द४द्य४का४ऽ५च्च५वृ५त्र४हा४न्४ । उ२दगाअभि२सूराऽ२
३ या२ । सार्व्वा४रुम्२ । तादिंद्र२तायेर३ । हुं । वा२३४५शो५६
हा५ यि५ ॥ २७ ॥

ऋषिः—भरद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २र ३ २ ३ १ २ ३ २ ३ १ २ २ ३ २ ३ २ ३ १ २
१२७. य आनयत् परावतः सुनीती तुर्वशं यदुम् । इन्द्रः स नो युवा सखा ॥

भारद्वसवे द्वे—

१. य४आ४हा५उ५ । आनाया४२ुत्२ । आनायाऽ२३त्३ । पाराऽ२ु वा३२३४ता५ः । सुनीतीतू४२ु । सुनीतीतूऽ२३ । व्र्वाशं२या३२ ३४ दू५म्५ । इन्द्रस्साना४२ुः । इंद्रस्सानाऽ२३ः । यूऽ२ु३वा३२ ३४ अ५हो५वा५ । सा३२३४खा५ ॥ २८ ॥

२. य४आ४न५य४त्४ । प५रा५वा५६ता५ः । सुनीतीतुर्व्वशा२ऽ या२३दू२म्२ । इन्द्रस्स नो युवा२ऽसा२३खा२ । इं२द्रो३२३४ ग्रा५यि५ । इं२द्राअ२३हो३२३४ । ग्रा५यि५ । आयिंद्रो२अ२ । ग्राऽ२ु । या३२३४अ५हो५वा५ । ई३२३४न्द्रा५ः ॥ २९ ॥

ऋषिः — श्रुतकक्षः ॥ देवता — इन्द्रः ॥ छन्दः — गायत्री ॥ स्वरः — षड्जः ॥

१ २   ३ २   २ ३  १ २  ३ १   २र
१२८. मा न इन्द्राभ्याऽऽ३दिशः सूरो अक्तुष्वा यमत् ।
२ ३ १ २  ३ २
त्वा युजा वनेम तत् ॥

तान्वे द्वे—

१. मा५न५इं५द्रा५भि५या५दा४यि४शा५ः । सूरोअ२क्तु२ । षु२वायाऽ२३मा२३४३४[1]त्४ । तु३वा२३४यु३जा२ । व२ना- यिमाऽ२३ ता२३४ऽ३त्३ । ओऽ२३४५यि५ । डा५ ॥ ३० ॥

२. मा५ना४ऽ३आ२३यिं३द्रा४भि४या५दि५शा५ः । सू२रो२ुआ३२ ३४क्तू५ । षू२आ२ुया३२३४मा५त्५ । त्वायुजावनौ३ँहो२ । म२तौ४२ु । हुवायि । अ३ँहो३२३४५वा५६५६ । ए२३ । ययुऽ२ ३४५ः ॥ ३१ ॥

॥ [ इति ] तृतीयः प्रपाठकः ॥

---

१. अत्र '३४' संख्येयं द्विष्कृत्य विस्मृत्या लिखितेति प्रतीयते । —सम्पादकः

ऋषिः—मधुच्छन्दाः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
१२९. एन्द्र सानसिं रयिं सजित्वानं सदासहम्। वर्षिष्ठमूतये भर॥

रोहितकुलीये द्वे—

१. एु४न्द्र५सा४। न२सिं२रयिम्। सजित्वानं२स२दासा२३हा२म्२। वा२३ऋ३षी२। ष्ठामूत२या२३ऽउवाये२३। भा३२३४रा५॥ १॥

२. एु४न्द्र५सा५न५सा४यि४म्४। र२या४२ुयि२म्२। स२जित्वानं२स२दासाऽ२३हा२म्२। वाऋषी४२ुष्ठामूऽ२३। त२योऽ२३४वा५। भा४ऽ५रो५६हा५यि५॥ २॥

ऋषिः—मधुच्छन्दाः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २ ३ २उ ३ १ २ १ २ ३ १ २ ३ १ २
१३०. इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम्॥

१. इंद्राम्। इँद्रम्वाया४२ुम्२। महा। मँहाधाना४२ुयि२। इन्द्राम्। इँन्द्रमर्भा४२ुयि२। हवा। हँवामाहा४२ुयि२। युजाम्। युँञ्जम्वृत्रा४२ुयि२। षुवा। षुँवज्रिणाऽ२३४ऽ३म्३। ओ२३४५यि५। डा॥ ३॥

२. इ५न्द्रं५व५या५म्५। महा। मँहाधानाऽ२३यि३। आअ२३हो२। इह२। इ२हिवाला२ु। ओ३२३४वा५। इं५द्र५म५र्भा५इ५। हवा। हँवामाहाऽ२३यि३। आअ२३हो२। इह२। इ२हिवाला२ु। ओ३२३४वा५। यु५जं५वृ५त्रा५यि५। षुवा। षुँवज्रिणाऽ२३म्३। आअ२३ हो२। इह२। इ२हिवाला२ु। ओ३२३४वा५। ई३२३४हा५॥ ४॥

ऋषिः—त्रिशोकः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१३१. अपिबत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे । तत्रादददिष्ट पौंस्यम् ॥

सहस्रबाहवीयधृषतः—

१. अ५पि५ब५त्का५द्रू५६व५स्सु५ता५म्५ । इंद्राहो४रुयि२ । सहाहो४रु । स्राबा२ऽहुवे४रु । त२त्रादाऽ२३दि२ । ष्ट२पौ४रु । हौ४रु । हुवा४रु यि२ । ईई्या२ । सि२याम् । अऽ२३हो४वा५ । हो४ऽ५यि५ । डा५ ॥ ५ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१३२. वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन् । विद्धी त्वा३स्य नो वसो ॥

मारुतम्—

१. व२यमाऽ२३४यिं४द्रा५त्वाऽ२३याऽरुवा३२३४अ५हो५ वा५ । अ२भिप्रनोनु२मो२वृ२ष२न् । २ । वि२द्धारुयिरुतु३वा२३ । स्याऽरुना३२३४अ५हो५वा५ । वा३२३४सो५ ॥ ६ ॥

२. हा५उ५व५य५मिं५द्रा५ । त्वा४रुयावा४रुः । अभिप्रनोनुमो४रु वारिषा४रुन्२ । वि२द्धा४रुयि२तूवा४रु । स्य२नोऽ२३वाऽरु सा३२३४अ५हो५वा५अ२स्म भ्यं२गा२तु२वित्त२मा३२३४५ । म्५ ॥ ७ ॥

दिवोदासम्—

३. व५य५मिं५द्रा५ । त्वाया२३वा२ः । अभिप्रनोनुमो२ऽवा२३ऋ३ षा२न्२ । वि२द्धीरुतू३२३४वा५ । ओ३२३४हा५यि५ । स्य४ नो४वा५ । वा४ऽ५सो५६हा५यि५ ॥ ८ ॥

४. व५या५मौ४हो५ । इं४द्रा५ । त्वाया२३वा२: । अभिप्रनोनुमो२ऽ वा२३ऋ३षा२न्२ । वि२द्धी२त्वो३२३४हा५यि५ । स्यानो२३ हा२यि२ । व२सा । अ२३हो४वा५ । हो४ऽ५यि५ । डा५ ॥ ९ ॥

५. व३या२मौ३हो४वा४हा५यि५ । इं४द्रा५ । त्वा२अ३हो४वा४हा५ यि५ । या४वा५: । आऽ२३भि२ । प्राऽ२३नो२ । ओइनुमो वाऽ२३ऋ३षा२न्२ । वाऽ२३यि३द्धी२ । तूऽ२३वा२३ । स्याऽ२ ना३२३४ अ५हो५वा५ । वा३२३४सो५ ॥ १० ॥

ऋषि: —त्रिशोक: ॥ देवता —इन्द्र: ॥ छन्द: —गायत्री ॥ स्वर: —षड्ज: ॥

१३३. आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ॥

एध्मवाहानि त्रीणि—

१. आ५घा५ये५अ५ग्नि५मिं५धा४ता५यि५ । स्तृ२णन्तिबर्हिरानु षाक् । ये२षामिंद्रो युवाइहा । ऊवाइ । ऊवोऽ२३४ । वा५ । सा४ऽ५खो५६ हा५यि५ ॥ ११ ॥

२. आ५घा५य५इ४हा४ । ग्नि२मायि । धाता२ओ३२३४वा५ । ई३२ ३४हा५ । स्तृ२णं२ति२ब२ऋ२ही२३रा । नूषा२ओ३२३४वा५ । ई३२३४हा५ । ये२षाऽम् । आयिंद्रा२ओ३२३४वा५ । ई३२३४ हा५ । युवा । युंवाऽ२सा३२३४५खा५६५६ । ई३२३४ हा५ ॥ १२ ॥

३. अ५हो५आ५घा५या५६ए५ । ग्नि२मायिंधाता२ । अ३हो३२३४ वा५ । स्तृ२णै२ति२ब२ऋ२ही२३राऽनूषा२ । अ३हो३२३४

वा५। ये२षामायिंद्रा२। अ३हो३२३४वा५। यु३वा२३।
सा॒२३४खा४। उ५हु५वा५६हा५उ५। वा५॥ १३॥

ऋषिः—त्रिशोकः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१३४. भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः।
वसु स्पार्हं तदा भर॥

१. भि५। ध्यो४हा४यि४। वायिश्वाअपा। द्वायिषा२ओ३२३४ वा५। पारा२ओ३२३४वा५। बाधोजहायि। मार्धा२ओ३२३४ वा५। वसु२स्पा२र्ह२हन्तदाभ२रा३२३४५॥ १४॥

ऋषिः—कण्वो घौरः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१३५. इहेव शृण्व एषां कशा हस्तेषु यद्वदान्। नि यामं चित्रमृञ्जते॥

१. इ२हेवा॒२३शृ४ण्व४ए५षा५म्५। कशाहस्तेषुया२॒द्वा२३दा२ न्२। नि२या२मं२ची२३त्रा४॒३मृं२ज३ता५यि५। नि२यामं२ चायि। त्रॅमा॒२रं२जा३२३४ता५यि५। ए३हि३या२३४। अ३ हो४वा५। ए२हि२यौहोयि। ए२हि२यौहो॒२३यि३। ए३२३४ हि५॥ १५॥

ऋषिः—त्रिशोकः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१३६. इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः। पुष्टावन्तो यथा पशुम्॥

पौषम्—

१. इ४म३उ४त्वा४वि३च४क्ष५ते५। ए२३। स४खा४या५ः। इंद्र सोमा॒२३यि३ना२ः। होयिहोवा२। पु२ष्टावा॒२३न्ता२ः। होयिहोवा२३। य२थो॒२३४वा५। पा४॒५शो५६हा५ यि५॥ १६॥

ऋषिः—वत्सः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१३७.समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥

सिन्धुसामम्—

१. समस्यामा४२ु । न्या२वेविशाः । विश्वानामा४२ु । ता२कृष्टयाः । समुद्राये४२ु । व२सिंधाऽ२३वा२३४ऽ३ः । ओऽ२३४५यि५ डा ॥ १७ ॥

ऋषिः—कुसीदी काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१३८.देवानामिदवो महत्तदा वृणीमहे वयम् । वृष्णामस्मभ्यमूतये ॥

हाविष्मते द्वे—

१. दे५वा५ । ना५म्५ । इ३दा२ुओ३२३४वा५ । ओवा२ुओ३२३४ वा५ । मा३२३४हा५त्५ । त२दावृणायि । माहा२ुओ३२३४ वा५ । वा३२३४या५म्५ । वृ२ष्णामस्मा । भ्यामा२ुओ३२३४ वा५ । ता३२३४ ये५ ॥ १८ ॥

२. हा५उ५दे५वा५ना५मि५द५वो५म५ह५त्ता५उ५ । त२दा-वृणा२३यि३ । माहे२ुवा३२३४या५म्५ । ऐ४२ुहो२ऽआऽ२३ यि३ही२ । वृष्णामाऽ२३स्मा२ । भ्य२मूऽ२३ । ताऽ२ुया३२३४ अ५हो५वा२ । ह२विष्मते३२३४५ ॥ १९ ॥

हाविष्कृते द्वे—

३. दे५वा५ना५मि५द५वे५हा५उ५मा४हा५त्५ । त२दावृणायि । महायिवाऽ२३या२म्२ । वृष्णा४२ुहो२ऽयि । आऽ२३स्मा२ । भ्य२मूऽ२३ । ताऽ२ुया३२३४अ५हो५वा५ । ह२वि२ष्कृते३२-३४५ ॥ २० ॥

४. दे५वा५ना५मि५द५वो५मा४हा५त्५। तादावृ२णी२। म२हा-यिवाऽ२३या२म्२। वृष्णामाऽ२३स्मा२३। भ्य२मू२३४ऽ-वा५। ता४ऽ५यो५६हा५यि५॥ २१॥

ऋषिः—मेधातिथिः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१३९. सोमानां स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः॥

काक्षीवतम्—

१. सो५मा२३ना४ॅ४स्व४र४णा५म्५। कृ२णूहि२ब्र। ह्म२ण२ स्पताये२३। ओ२३४। हा३हो२यि२। कक्षायिवाऽ२३न्ता२ म्२। य२अ३हो२युयि२उ। अ३हो२ऽ२३४वा५। शा४ऽ५यि५जो५६ हा५ यि५॥ २२॥

ऋषिः—श्रुतकक्षः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४०. बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः। शृणोतु शक्र आशिषम्॥

औषसम्—

१. बो५ध५न्म५ना५:। इदा४२उ स्तूना४२उ। वृ२त्रहा२भू। रॅया२उ [1]सू२३३४ति५:। शृणा२३४अ४हो५। तु३श३क्र२आ। शि। षाम्। अऽ२३हो४वा५। हो४ऽ५यि। डा५॥ २३॥

ऋषिः—श्यावाश्वः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४१. अद्या नो देव सवितः प्रजावत्सावीः सौभगम्। परा दुःष्वप्न्यं सुव॥

भरद्वाजस्य मौक्षे द्वे—

१. अ५द्य४नो५दे५व५स५वि५त५:। अ४हो५वा४। [2]इ२हश्रु

१. अत्र प्रकृतवत् 'सू२३४' अथवा 'सू ३२३४' एवं पाठः स्यात्।
२. 'इह श्रुधि', 'दक्षाय' तथा 'अस्मभ्यं गातु वित्तमः' पदानीमानि मन्त्रे न सन्ति।' --सम्पादकः

धायि। प्रजावाऽ२३त्सा२। वी२स्सौभगाम्। परादूऽ२३ष्वा२३। होवा२३हा२। ष्नि२यःसूऽ२३४५वा५६५६। [1]दक्षा२३याऽ२३४५॥ २४॥

२. अ३द्या२३४। नो४दे४व५सा५। वि४ता५ः। प्र२जा२वत्सा। वी२ स्सौभगाम्। पारा२३दू४ष्वा५। ष्नि२य२ः२सुवोवा२३। ओऽ२३। वा३२३४अ५हो५वा५। [1]अ२स्मभ्यं२गा२तु२वित्त२मा३२३४ ५म्५॥ २५॥

ऋषिः—प्रगाथः काण्वः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
१४२. क्वा३स्य वृषभो युवा तुविग्रीवो अनानतः। ब्रह्मा कस्तं सपर्यति॥

भारद्वाजानि त्रीणि—

१. कुऽ२३४व४स्य४वा४ऽ५वा४ऽ५ऋ५ष५भो५यु४वा४। तु२वि२ ग्रीवो४२। अ२नानताः। ब्रह्मकाऽ२३स्ता२म्२। ऐ४२। हो२ऽआऽ२३ यि३ही२। स२पर्या२३ता२३४ऽ३यि३। ओऽ२३४५यि५ डा५॥ २६॥

२. कु४वा५कु४वा५। स्य२वृ२षा२३भोयुँवा३ँ। ओ२३४। हा३हो२यि२। तु२वि२ग्री२वो२आ२३नानैँताँ३ः। ओ२३४। हा३हो२यि२। ब्रह्माऽ२३। काऽ२स्ता३२३४अ५हो५वा५। स२पर२र्य२ती३२३४५॥ २७॥

३. ऐ५ही५यै५ही५। क्वा५स्य५वृ५ष५भो५यु४वा४। ऐ५ही५यै५ही५। तु५वि५ग्री५वो५अ५ना५न४ता४ः। ऐ५ही५यै५ही५।

---

१. 'इह श्रुधि', 'दक्षाय' तथा 'अस्मभ्यं गातु वित्तमः' पदानीमानि मन्त्रे न सन्ति।' —सम्पादकः

ब्र५ह्मा५क५स्त५ऽ५स५प५र्य४ती४। ऐ५ही५यै५ही५। अऽ२ यि२। हि३या२३४अ५हो५वा५। आ३२३४यि४ही५॥ २८॥

ऋषिः—वत्सः काण्वः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४३. उपह्वरे गिरीणां सङ्गमे च नदीनाम्। धिया विप्रो अजायत॥

शाक्त्यसामनी द्वे—

१. उपह्व२रायि। गिरा४२युयि२णाम्। सङ्गमे२चा। नदा४२युयि२ नाम्। धियाऽवि२प्रो। अजाय२ता। अयाम्। अ२या२३ऽउ। वाऽ२३। ऊ२३४पा५॥ २९॥

२. इ३दा२मी३२३४दा५म्५। इ२दामि२द३क२म्२। इ३दा२मी३२३४दा५म्५।[1] उ५प५ह्व२रे२गी२३रायिणा२म्२। इ३दा२मी३२३४ दा५म्५। इ२दामि२द३क२म्२। इ३दा२मी३२३४ दा५म्५। सं२ग२मे२च२ना२३दायिना२म्२। इ३दा२मी३२३४ दा५म्५। इ२दामि२द३क२म्२। इ३दा२मी३२३४दा५म्५। धि२या२वि२प्रो२आ२३जायाता२। इ३दा२मी३२३४दा५म्५। इ२दामि२द३क२म्२। इ३दा२३मा४ऽ५यि५दा५६५६म्६। गोष्प२देपृट्॥ ३०॥

ऋषिः—इरिम्बिठिः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४४. प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः। नरं नृषाहं मंहिष्ठम्॥

१. [2]प्र५सं५म्रा५जा५म्५। चात्रृषा४२णायिना४२म्२। आयिंद्रा ४२ऽ२स्तोताऽ२३। नव्याऽ२ङ्गा३२३४यि४र्भी५ः। नारा४२न्ना त्रृषाऽ२३। ह४म्मो४वा५। हा४ऽ५यि५ष्ठो५६हा५यि५॥ ३१॥

१. मूलपाठेऽत्र 'उ५२प५२' एवं लिखितम्।
२. 'प्र' अस्मादग्रे २,४,५ एतासु काचित्संख्या विद्यतेऽस्पष्टत्वान्न ज्ञायते। —सम्पादकः

२. प्र४सं५म्रा५जो४हा४यि४। चात्रृषाणि२३ना२म्२। आयिंद्राः स्तो२३ता२३। नव्याऽ२ङ्गा३२३४यि४र्भी५ः। ना५र३मो२ यि२। नृ३। षा५। ह३मो२३यि२। म४ः४हा४ऽ५यि५ष्ठा५म्५। हो४ऽ५यि५। डा५॥ ३२॥

प्रस्तोकौ द्वौ—

३. प्र३सं४म्रा३जं४च५। ष३णा२३ऽ२३४यि४ना५म्५। इं२द्राः स्तो२३ता२३। नव्याऽ२ङ्गा३२३४यि४र्भी५ः। न४रं५नृ५षा४हं५ मा४ऽ५ः५हि५। आ५६हा५उ५वा५। ष्ठा३२३४५ म्५॥ ३३॥

४. प्र४सं५म्रा४जं५च५ऋ५ष५णी५ना४मिं४द्र५ः५स्तो५ता५ न४। व्य५ङ्गा५६यि६र्भी५ः। इंद्रः स्तोता नव्यङ्गाऽ२३यि२र्भी२३४ः। न४रं५नृ५षा४ह५म्५। मा४ऽ५ःहि५ष्ठा४म्४। स२ह२मै२है३ँ हे। ऽ२। या३२३४अ५हो५वा५। मः२ही२३ष्ठाऽ२३४५ म्५॥ ३४॥

[ इति ] अर्द्धप्रपाठकः॥

ऋषिः—श्रुतकक्षः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २ ३ १ २
१४५. अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः। इन्दोरिन्द्रो यवाशिरः॥

औपगवे द्वे—

१. अ५पा५दु५सि५। प्रि२यन्धसाः। सुदक्षाऽ२३स्या२। प्र२हो२ षिणः। इन्दो राऽ२३यिं३द्रा२ः। य२वाशाऽ२३यि३रा२ः। ऐ२। हियाऽ२ यि२। हि३या२३४अ५हो५वा५। ए२३। उप२३ऽ२३ ४५॥ १॥

२. अ५पा५दू२३शिप्रि४यं५ध५सा५ः। सु२दक्षस्यप्रहोषिणाः। इं२ दौ४२ु। हौ४२ु। हुवाऽ२३यि३। आ२३४यिं४द्रो५। य५वा५ शा४ यि४रा५ः। ऐ२। हा४२ुएऽ२३। हि३या२३४अ५हो५वा५। ए२३। उपा२३ऽ२३४५॥ २॥

ऋषिः—मेधातिथिः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४६. इमा उ त्वा पुरूवसोऽभि प्र नोनुवुर्गिरः। गावो वत्सं न धेनवः॥

त्वाष्ट्रीसामम्—

१. इ५मा५उ५त्वा५। पुरू४२ुवासा४२ुउ२। अभि[1]प्रनोनवू४२ुग्गीयि राऽ२ु। अ३होर२ऽयि। गा२वो२वात्साऽ२३म्३। नाऽ२३धे४ऽ३। ना२३४५वो५६हा५यि५॥ ३॥

ऋषिः—गोतमः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१४७. अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥

त्वष्टुरातिथ्ये द्वे—

१. आ४त्रा५। [2]हा२गोरमन्वता उ वाऽ२३। होवाऽ२३होयि। नाम त्वष्टुरपी चिया उ वाऽ२३। होवाऽ२३होयि। इ२त्था चंद्रमसो गृहा उ वाऽ२३। होवाऽ२३होऽ२ु। वा३२३४अ५हो५वा५। ऊ३२३४पा५॥ ४॥

२. हा४वा४त्रा५। हा२गोरमन्वता उ वाऽ२३। होयियाऽ२३। हा४२ु ऊ वा। यि। नाम त्वष्टुरपीचियामिया उ वाऽ२३होवाऽ२३ हा४२ु२ इया। इ२त्था चंद्रमसो गृहा उ वाऽ२३। होइयाऽ२३। हा४२ु ऊ वाऽ२ु। या३२३४अ५हो५वा५। ऊ३२३४पा॥ ५॥

---

१. मूलवेदेऽत्र 'प्र नोनुवुः' इति पाठः।

२. मूलग्रन्थेऽत्र 'ता२' इति लिखितम्। 'हा२' इत्युचितः पाठः। —सम्पादकः

ऋषिः—भरद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२उ ३ १ २ ३ १ २ ३ २ ३ १ २र १ २ ३ १ २ ३ १ २
१४८. यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः। तत्र पूषाभुवत् सचा ॥

१. य५दिं५द्रो५या५। नाया ऽ२३त्३। ओमो२३म्३। ओ४वा५। रितोमहीरापाऽ२३ः। ओमो२३म्३। ओ४वा५। वृषावृँषाऽ२ु। त३मा२३४अ५हो५वा५। तत्र२पूरषाभुरवरत्सचा३२३४५ ॥ ६ ॥

२. य५दिं५द्रो५अ५न५य५द्रि५ता५६ए५। महीरापा४२ुः। महीरापाऽ२३ः। वाऋषं२ता३२३४मा५ः। तत्रापूषा२३। पूऽ२ुषा३२३४अ५ हो५वा५। भुरवरत्सचा३२३४५ ॥ ७ ॥

ऋषिः—बिन्दुः पूतदक्षो वा ॥ देवता—मरुतः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २उ ३ १ २
१४९. गौर्धयति मरुतां श्रवस्युर्माता मघोनाम्। युक्ता वह्नी रथानाम् ॥

श्यावाश्वे द्वे—

१. गौ५र्द्धं५या५६ए५। ति२म२रु२ता२३म्३। श्रवास्युँर्म्मा३ँ। ता२म२ुघो३२३४ना५म्५। युक्तावँह्नायिः। र३था२३। नाऽ२ुमा३२३४अ५हो५वा५। ऊ३२३४पा५ ॥ ८ ॥

२. गौ५र्द्धं५य५ति५म५रु५ता५६मे५। श्र२व२स्युर्म्मा२ँता मघोना२ँम्२। उ२हुवाऽ२३हा२यि२। यु२क्तावाऽ२३ह्नि२ः। उ२हूवा२३। हा२ुयि२ु। र३था२नाम्। अऽ२३हो४वा५। हो४ऽ५यि५। डा५ ॥ ९ ॥

ऋषिः—श्रुतकक्षः सुकक्षो वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १ २ ३ २
१५०. उप नो हरिभिः सुतं याहि मदानां पते। उप नो हरिभिः सुतम् ॥

प्रजापतेः सुतꣳरयिष्ठीये द्वे—

१. उ२पनोऽ२३ह४रि४भि५स्सु५तो४वा५ । या२हि मदा२३ना३ म्प२ । ताऽ२३ । यि३ । उ२प३नो२३ । हा२३ओऽ२३४वा५ । रा३२३४यि४भी५ः । सु२ताम् । अऽ२३हो४वा५ । हो४ऽ५यि५ । डा ॥ १० ॥

२. उ५प५नो५हा५हो४हा५ । रा४यि४भी५ः । सूऽ२३ता२म्२ । याहिम२दा२ । नाम्पाऽ२३ता२यि२ । उ३पा२नो३२३४हा५ । राऽ२यि२भा३२३४अ५हो५वा५ । सु२तꣳरयि२ष्ठाऽ२३ ४५ः ॥ ११ ॥

ऋषिः—श्रुतकक्षः सुकक्षो वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥
स्वरः—षड्जः ॥

३ १ २र ३ १ २ ३ १ २ ३२ १ २ ३ १ २र
१५१.इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे । अच्छावभृथमोजसा ॥

इष्टाहोत्रीयम्—

१. इ५ष्टा५हो४त्रा५ः । आसृ२क्षा३२३४ता५ । इं२द्रम्वृधा । तौऽ२ ध्वा३२३४रा५यि५ । आच्छा२३वो४भृे५[1] । थ३मो२३जा४ऽ५ सा५६५६ । ए२३ । उ२द२धिन्निधी२ऽः ॥ १२ ॥

ऋषिः—वत्सः काण्वः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ २उ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २र
१५२.अहमिद्धि पितुष्परि मेधामृतस्य जग्रह । अहं सूर्यइवाजनि ॥

निधनकामम्—

१. अ४ह४मि४द्धा४ऽ५यि५ । पि५तु५ष्प४रा४यि४ । मे२धामृतस्य जग्रहा । अ२हꣳसूर्याः । इॅवाऽ२३४ । हा३ॅहो२यि२ । जनि । होयि । २ । अ२होअ२होवाऽ२३४५हा५उ५ । वा५ ॥ १३ ॥

---

१. अत्र 'भ्रे५' इति पाठः स्यात् । —सम्पादकः

ऋषिः—शुनःशेपः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५३.रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥

वाजदावर्यम्—

१. रे५व५ती५र्न्ना५ः । सधाऽ२मा३२३४दा५यि५ । इंद्राऽ२यि२ सा३२३४न्तू५ । तु२विवा४२जाः । क्षूऽ२३मा२ । तो४२या । भि२र्म्मोऽ २३४वा५ । दा४ऽ५यि५मो५६हा५यि५ ॥ १४ ॥

ऋषिः—शुनःशेपो वामदेवो वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५४.सोमः पूषा च चेततुर्विश्वासां सुक्षितीनाम् । देवत्रा रथ्योर्हिता ॥

सोमाः पौषम्—

१. सो५म५ष्पू५षा५ । च२चायिततु२ः । अ३या२यो३२३४वा५ । वायिश्वासाः२सु२क्षि२[१]ती२ । ऽ३नाम् । अ३या२यो३२३४ वा५ । दायिर्वत्रा राऽ२३ । थि३यो२३ऋ३हा४ऽ५यि५ता५६ ५६ । गावोरॅअश्वा३२३४५ः ॥ १५ ॥

[ इति ] दशतिः ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—अनुष्टुप् ॥ स्वरः—गान्धारः ॥

१५५.पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥

वैतहव्यानि त्रीणि—

१. पा४न्त५मा४वो५अं४न्ध५सा४ः । इं२द्रामाभी२ । प्र२गाया ता२३ । हा२३हा२यि२ । वि२श्वासाह२म्२ । श२ताक्रातू२३

१. हस्तलेखेऽस्पष्टत्वान्नैव ज्ञायतेऽत्र 'तौ२ । ३ नाम्' एवं पाठोऽथवोपरि दर्शित इवास्ति ।
—सम्पादकः

म्३ । हा२३ हा२यि२ । मः२हाइष्ठंचा२३ । हा२३हा२ । ष२ णाऽ२ुयि२ु । ना३२३४अ५हो५वा५ । ऊ२३ऽ२३४ पा५ ॥ १६ ॥

२. पा४न्त५मा४वो५अं४ध५स५ः । इ४हा४ । इं२द्र२मभायि। प्र२गा२ यता४२ु । इहा२ । विश्वासाहः२शता४२ुक्र२तूम् । इहा२ । मः२२ुहा४२ुयि२ष्ठं२चा । इहा२ । ष२णा४२ुयि२नाम् । इहा३२ ३४५ ॥ १७ ॥

ओकोनिधनम्—

३. पा३ऽ५न्त५म्५ । आ४ऽ३वो२३अं४ध४सा५ः । आयिंद्रा- मभायि । प्रॅगाऽ२ुया३२३४ता५ । विश्वाऽ२ुसा३२३४हा५म्५ । शा२३ ताक्रा२३तू२म्२ । मःहि२ष्ठं२चक्रष२ । णाये२३ । नाऽ२ुमा३२३४५अ५हो५वा५ । ओ२३का३२३४५ः ॥ १८ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
१५६. प्र व इन्द्राय मादनं हर्यश्वाय गायत । सखायः सोमपाव्ने ॥

शाक्त्यसामानि षट्—

१. प्रवइंद्राऽ२ु । य३मा२ुदा३२३४ना५म्५ । प्र२वा४२ुइन्द्रा । अ२३ हो२ु । या३२३४मा५ । हा२३ना२म्२ । ह२रा४२ुअश्वा । अ२३ हो२ु । या३२३४गा५ । या२३ता२ । स२खा४२ुयास्सो । अ२३ होर२३ । मापोऽ२३४वा५ । आ४ऽ५०नो५६हा५ यि५ ॥ १९ ॥

२. प्रवा४२ुइंद्रा । अ२३हो२ु । या३२३४मा५ । दा२३ना२म्२ । हरा४२ु । अश्वा । अ२३हो२ु । या३२३४गा५ । या२३ता२ । सखा४२ुयास्सो । अ२३हो२३ । मापोऽ२३४वा५ । आ४ऽ५ ०नो५६हा५यि५ ॥ २० ॥

३. प्र२व२ईइ३ॅया२। ईइ३ॅया२। इंद्रोईइ३ॅया२। ईइ३ॅया२ु। या३२३४मा५। दा२३ना२म्२। ह२र२ईइ३ॅया२ईइ३ॅया२। आश्वोइ३ॅया२। ईइ३ॅया२ु। या३२३४गा५। या२३ता२। स२ख२ईइ३ॅया२। ईइ३ॅया२। यास्सोईइ३ॅया२। ईइ३ॅया२३। मापोऽ२३४वा५। आ४ऽ५ञ्नो५६हा५यि५॥ २१॥

४. प्र२वौ२होवा४२ु। इंद्रौहोवा२ु। या३२३४मा५। दा२३ना२म्२। ह२रौ२होवा४२ु। आश्वौहोवा२ु। या३२३४गा५। या२३ता२। स२खौ२हौवा४२ु। यास्सौहोवा२३। मापोऽ२३४वा५। आ४ऽ५ञ्नो५६हा५यि५॥ २२॥

५. प्र२वो२दा२३दा। अ२३हो२। इंद्रोददा। अ२३हो२ु। या३२३४मा५। दा२३ना२म्२। ह२रि२दा२३दा। अ२३हो२। आश्वोददा। अ२३हो२ु। या३२३४गा५। या२३ता२। स२खि२दा२३दा। अ२३ हो२। यास्सोददा। अ२३हो२३। मापोऽ२३४वा५। आ४ऽ५ञ्नो५६हा५। यि५॥ २३॥

६. प्र४व५ः। प्र५वा४ः। इं२द्रा२यें२द्रा२। यमादा२ऽना४२ुम्२। ह२रा२यि२ह२र्य२श्वा२। यगाया२ऽ२ता४२ु। सखाया२३स्सो२३। मापोऽ२३४वा५। आ४ऽ५ञ्नो५६हा५यि५॥ २४॥

ऋषिः—मेधातिथिप्रियमेधौ॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१५७. वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः। कण्वा उक्थेभिर्जरन्ते॥

काण्वे द्वे—

१. व५यं५वा४या५म्५। ऊ३२३४त्वा५। ता२दी२ुदा३२३४र्था५ः। इं३द्र४त्वा५यं४त५ः। स३खा३२३४या५ः। २। क३।

ण्वा२३ऽ२३४:। उ४क्थे४भि५र्ज्ज५रं५ते५। ए५हि५या५६
हा५।हो४ऽ५यि५।डा५॥ २५॥

२. व५य५मू२३त्वा४त४दि४द४र्था५:। ऐहीहा४रुयि२। व२
यमुत्वातदिदार्था इंद्र त्वायंतस्स२खाऽ२३याऽ२ु:।
का३२३४ण्वा५:। ऊ। क्थायि। भि२ज्जाऽ२३४वा५।
रं२ता२३या३२३४५॥ २६॥

ऋषि:—श्रुतकक्ष:॥ देवता—इन्द्र:॥ छन्द:—गायत्री॥ स्वर:—षड्ज:॥

१५८.इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिर:। अर्कमर्चन्तु कारव:॥

गौरीवीते द्वे—

१. इं४द्रा५य५म४द्व५ना४यि४। सु२ताम्। इंद्रायमद्वने सु२ताम्।
प२रायिष्टोऽ२३भा२। तु२नोगिरो। अर्क्कमाऽ२३र्च्चा२।
तु२काराऽ२३वा२३४ऽ३:।ओऽ२३४५यि५।डा५॥ २७॥

२. इं५द्रा५य५ म५द्व५ने५हा५उ५।ओयिसू२३ता२म्२।परिष्टो२।
भा।तुँनोऽ२३हा२यि२।गायिरा४रु:।परिष्टोभातु।ओनोऽ२३
हा२यि२।गाइरा४ रु:।अर्क्काऽ२३म्३।आऽरुर्च्चा३२३४
अ५हो५-वा५।ए२३।तु२का२३२वाऽ२३४५:॥ २८॥

श्रौतकक्षम्—

३. इं४द्रा५य५म४द्व५ने५सु५त४म्४।इं५द्रा५य५मो४वा५।द्वा२३
नायिसू२३ता२म्२। परिष्टो२। भाऽ२३। हा२३हा२३। तू
नोऽरुगा३२३४यि४रा५:। आर्क्कमर्च्चा२३। हो२३हा२।
तु२काराऽ२३ वा२३४ऽ३:।ओऽ२३४यि५।डा५॥ २९॥

ऋषिः—इरिम्बिठिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१५९.अयं त इन्द्र सोमो निपूतो अधि बर्हिषि। एहीमस्य द्रवा पिब ॥

सौमित्रे द्वे—

१. अ५यं५त५आ५[1]।द्र२सोमो।होवा२३होयि।नि२पूतोआ२३।धीब२ऋ२हा३२३४यि४षी५।आयिही२म२स्याऽ२३।द्राऽ२ुवा३२३४अ५हो५वा५।पी३२३४बा५ ॥ ३० ॥

२. अ५यं५त५इं५द्र५सो५ऽ४मा५ः।निपूतोअधिबा४२ुऋ२हायिषी४२ु। ऐ२हो४२ुयि२मास्या। द्र२वा२पायिबा४२ु। आयिहीमस्याद्र२वा२३ऽउ वाऽ२३।पी३२३४बा५ ॥ ३१ ॥

इहवद्दैवोदासम्—

३. अ४यं३त४इं४द्र४सो३ऽ४म५ः।नाऽ२३४यि४।पू४तो५अ४धि५ब५ऋ५हि४षि५।निपूतोअधि२बऋहऽ२३यि३षी२।ऐ२होयिमाऽ२३स्या२।द्र२वापाऽ२३४५यि५बा५६५६।ई३२३४हा५ ॥ ३२ ॥

ऋषिः—मधुच्छन्दाः ॥ देवता—प्रजापतिः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६०.सुरूपकृत्नुमूतये सुदुघामिव गोदुहे। जुहूमसि द्यविद्यवि ॥

रैणवे द्वे—

१. सू४रू५। प२कृत्नुमूत२यायि। सु२दुघा२म्२। इव गो४२ु। दुह२या२३ऽउवाऽ२३।ऊ२३४पा५।जु२हूमाऽ२३सी२द्यविद्यवि२या२३ऽउवाऽ२३।ऊ२३ऽ२३४पा५ ॥ ३३ ॥

---

१. मन्त्रानुकूलमत्र 'आ' इत्यस्य स्थाने 'आयि' अथवा 'इ' इति स्यात्। —सम्पादकः

२. सु५रू५हा५उ५। प२कृत्नुमू४२ुतायाा४२ुयि२। सु२दुघा२म्२। इवगो४२ु। दुहे२। ऐ२ही२यै३ही२ऽ। जु२हौ४२ु। हौ४२ु। हुवा४२ुयि२। मासी४२ु। द्यविद्यवि। ऐ२ही२यै३ही२ऽ॥ ३४॥

३. सु२रू२प२कृ२त्नू२३मूता२३४या५यि५। ओयिसुरूप कृत्नूमू२ऽताया४२ुयि२। ओयिसुदुघामिवागो२ऽदुहा४२ु। यि२। जुहूमसाऽ२ुयि२ु। द्य३वि२द्या३२३४वी५। ऐ४ही५। जूहू४२ुमासी४२ु। द्य२विद्या। वीवीऽ२३। आ४अ५हो५यि५। आ४अ५हो५६वा५। ए२३। द्य२वी२३ईऽ२३४५॥ ३५॥

४. सु४रू५प५क्रे४। त्नूमू४२ुत२यायि। सु२दुघामी२३। वागो२ु दू३२३४हा५यि५। सु४दु५घा५मा४। वागो४२ुदु२हायि। जु२हूमाऽ२३सी२३। द्याऽ२३वी४ऽ३। द्या२३४५वो५६हा५ यि५॥ ३६॥

[ इति ] चतुर्थः प्रपाठकः॥

ऋषिः—त्रिशोकः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६१. अभि त्वा वृषभा सुते सुतं सृजामि पीतये। तृम्पा व्यश्नुही मदम्॥

१. अ५भि४त्वा५वृ५ष५भा५सु५ता४यि४। सूतꣳसृ२जा२। मि२ पायिता२ऽया४२ुयि२। त्र्यं२पावा२ऽयाऽ२। श्नु२हा२३ऽ उवाये२३। मा३२३४दा५म्५॥ १॥

२. अ५भि५त्वा५वृ५ष५भा५सु५ते५अ५भ्या५हा५उ५। त्वा२ व्रे२३षाभा२ऽसूता४२ुयि२। सूतꣳसृ२जा२। मि२पायिता२ऽ याऽ२ुयि२ु। त्र्यं३पा२३होयि। वि३या२३हो। श्नु२हीमाऽ २३दा२३४ऽ३म्३। ओऽ२३४५यि५। डा५॥ २॥

३. अ५भि४त्वा५वृ५ष५भा५सु५ते४। सु५त५ऽ५सृ५जो४वा५। मि२। पी२ता या४२ुयि२। सु२तऽसृजा२मि२। पीताऽ२३ या२यि२। त्राऽ२३म्पा२३। वाऽ२ुया३२३४अ५हो५वा५। श्नु२ ही२मदां३२३४५म्५ ॥ ३ ॥

ऋषिः—कुसीदी ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६२. य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः। पिबेदस्य त्वमीशिषे ॥

कौत्से द्वे—

१. या३हीरन्द्राऽ२३। च४म५से४षु४वा४ई४या५। सोमश्च२मूषु ते२सु२तः। सोमश्च२मू२। षु२तायिसूऽ२३ता२ः। पाइबे२३ व्दा२यि२। आस्या२३हा२यि२। त्व२मीशाऽ२३यि३षा२३४ ऽ३यि३। ओऽ२३ ४५यि५। डा५ ॥ ४ ॥

२. य५इं५द्रा५चा५मा५६से५षु५वा५। सोमश्चमूषुता२ऽयिसू२३ ता२ः। सो२म२श्च२मू२३। षू२३तायिसू२३ता२ः। आऽ२ यि२। पि२बे२द२स्यो३२३४हा५यि५। त्व३मा२३यि३शा४ऽ५ यि५ षा५६५६यि६ ॥ ५ ॥

ऋषिः—शुनःशेपः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१६३. योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये ॥

सौमेधानि त्रीणि—

१. यो४गे५यो५गे५त५व४स्त४रा४म्४। वाजेवा२जे२ह२वा२म२ हे२। स२खायाऽ२३ई२३। द्र२मूऽ२३४वा५। ता४ऽ५यो५६ हा५यि५ ॥ ६ ॥

२. योऽ५गेऽ५योऽ५गेऽ५तऽ५वऽ५स्ताऽ५६राऽ५मऽ५। वाजेँ२वाजेँ२हवा२ऽम२ हे२३। होवा२३हा२यि२। साखा४२ुयाईऽ२३। होवा२३हा२ यि२। द्र२मूऽ२३। ताऽ२ुया३२३४अ५हो५वा५। ऊ२३ऽ२३४ पा५॥ ७॥

३. योऽ५गेऽ५योगेऽ५तऽ५वाऽ५हाऽ५उऽ५स्ता४राऽ५म्ऽ५। वाजेवा२जे२। ह२ वा४२ुमाहायि। हूवायि। अ२३हो३२३४वा५। साखा२य२इ। द्रमू४२ुतायायि। हूवायि अ२३हो३२३४वा५। स३खा३य२आ। हूवा४२ुयि२। ॲ२३हो३२३४५वा५६५६। द्र२मू२३तयेऽ२३-४५॥ ८॥

ऋषिः—मधुच्छन्दाः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६४.आ त्वेता नि षीदतेन्द्रमभि प्र गायत। सखायः स्तोमवाहसः॥

१. आ३तू२३४। ए४ता४नि४षी५दा५६ता५। इं२द्र२मभाइ। प्र२गा२ यता। साखा२य२स्तोम। वा। अ२३हो२। ववाऽ२ु हा३२३४सा५ः। ह२यायि। साखा२य२स्तोम। वा। अ२३हो२। हुम्माऽ२३। हा२३४५सो५६हा५यि५॥ ९॥

ऋषिः—विश्वामित्रः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६५.इदं ह्यन्वोजसा सुतं राधानां पते। पिबा त्वा३स्य गिर्वणः॥

अंगिरसानि त्रीणि—

१. इ५दा५६मे५हि२या२३नू ओ२ऽजासा४२ु। सूतः२राधा२। नाम्पा२ऽता४२ुयि२। पिबातुवस्यागिर्ँव्वाणाऽ२३४ः। पि३बा २३४तु३वा२३। स्याऽ२ुगा३२३४अ५हो५वा५। वा३२३४ णा५ः॥ १०॥

२. इ५द५ऽ५हि५या५ऽ४अ४हो५। नूऽ३ओ२जा३२३४ सा५। सूतऽ२राधा२। नाऽ३ऽ२मूऽ२। पा३२३४ता५यि५। पिबातु-वस्याऽ२३। ग४। वा४हा५यि५। वाऽ२३४णा४ः। ए५ हि५या५६ हा५। हो४ऽ५यि५। डा५॥ ११॥

राधुच्छंदसं क्रोचम्—

३. इ५द५ऽ५ह्य५नू५६ओ५ज५सा५। सु२तऽराधा२। नाम्पातौ२। हो२ वा२३हा२यि२। पि२बातुव२। स्य२गायिर्व्वाणौ२हो२ वा२३ हा२यि२। पि२बातुवौ२। हो२वा२३हा२। स्य२ गाये२३४। वाऽ२ना३२३४अ५हो५वा५। घृ२त२श्चुता३२ ३४५ः॥ १२॥

ऋषिः—मधुच्छन्दाः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६६. महाँ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे। द्यौर्न प्रथिना शवः॥

वाम्रानि त्रीणि—

१. म४हा४ऽ४इं५द्रा५ः। पु२र२श्चनो। मा२ऽही४२त्वामा४२। स्तु२ व२। ज्रिणायि। द्यौ४२र्नाप्रा४२। थि२नाशाऽ२३वा२३४ऽ३ः। ओऽ२३४५यि५डा५॥ १३॥

२. म५हा५हा५इं४द्रा५ः। पू२३राश्चा२३नो२। महाऽ२यि२त्वा३२ ३४मा५। स्तु२वौ३ऽहौ२३। ह४वा४ऽ५ज्रि५णा५यि५। द्यौर्न्नप्राथि२ नाशँवाऽ२३ः। द्यौ। ऽ२र्न्ना३२३४प्रा५। थि२नौ३ऽ हौ२३। ह४वो४वा५। शा४ऽ५वो५६हा५यि५॥ १४॥

३. म४हा४इं४द्रा४ऽ५ष्पु५र५श्च४ना४ः। मा३हि२त्वा३ऽ२३२३ मा२। स्तु३व२ज्रा३ऽ२३ऽ२३यि३णा२यि२। द्यौ२र्न्ना३ऽ२३ऽ २३प्रा२। थि३ना३श२वा३ऽ२३ऽ२३२३४ऽ३ः। ओऽ२३४५ यि५। डा॥ १५॥

ऋषिः—कुसीदी काण्वः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१६७. आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय। महाहस्ती दक्षिणेन॥

गौरिवीते द्वे—

१. आ५तू५न५आ५[1]। द्र२क्षुमाऽ२३न्ता२म्२। चायित्रं ग्रा२भाऽ २३ः३हा२यि२। संगृ४२भाया। म४हा२ह२स्तो३२३४हा५ यि५। दक्षा४२ यि२णायिना। महाऽ२३। हाऽ२स्ता३२३४अ५ हो५वा५। दक्षि२ णे२३नाऽ२३४५॥ १६॥

२. आ५तू५न५इं५द्र५क्षु५मा४न्ता५म्५। चित्राऽ२ः२ग्रा३२३४ भा५ म्५। सं२गृभा३२३४या५। मा३हा२३। हाऽ२स्ता३२३४ अ५हो५वा५। दक्षि२णे२ना३२३४५॥ १७॥

औपालवेणवे द्वे—

३. आ४तू४न५इ४। द्र५क्षु५मा५६न्ता५म्५। चि२त्रङ्गाभः सङ्गृभा४२या। चि२त्रङ्गाभःसमग्रे। अ२३हो२यि२। भा३२३४या५। ऐ२होयि। महाहस्तीदक्षाऽ२३होयि। औ२ होवा३हो३२३४ वा५। णा४ऽ५ यि५नो५६हा५यि५॥ १८॥

४. आ५तू५न५इं५द्र५क्षू५मा५६न्ता५म्५। चि२त्रङ्गाभः सङ्गृभाया। चि२त्रङ्गाभःसम्। ग्रेऽ२३। ई२३४हा५। भा३२

१. मन्त्रेऽत्र 'इन्द्र' इति पठितं परं गाने 'इ' इत्यस्य स्थाने 'आ' इति लिखितम्। —सम्पादकः

३४या५ । ऐ२होयि महाहस्तीदक्षाऽ२३होयि । अ२हो । वा३
हो३२३४वा५ । णा४ऽ५यि५नो५६हा५यि५ ॥ १९ ॥

ऋषिः—प्रियमेधः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ १ २र ३१ २ ३ १ २ ३२ ३२ ३ २ ३ १ २
१६८.अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुं सत्यस्य सत्पतिम् ॥

१. अ४भी५अ४भी५ । प्र२गो३ॅपातिँङ्गिरा४२ु । इंद्रमर्च्चयाथा२ऽ विदाऽ२ुयि२ु । सू३नु२३ः३होयि । सत्यो३२३४हा५ । स्याऽ२ु सा३२३४अ५हो५वा५ । प२ती२३मेऽ२३४५ ॥ २० ॥

२. अ४भी५अ४भी५ । प्र२गो । प२ति३ङ्गि२रा । इन्द्राम् । अ३र्च्चा२ु या३२३४था५ । हुं३ॅहुं२३ । आऽ२३४यि४वि४दा४यि४ । सू४नुः ३स४त्य३स्य४सा५ । हुं३ॅ । हुं२३ । ओऽ२३४वा५ । पा४ऽ५ तो५६हा५यि५ ॥ २१ ॥

महागौरिवीतम्—

३. अ५भि५ । प्र३गो२३ । प४तिं४गि५रा५ । इंद्रमर्च्चयथाविदाऽ२३ यि३ । सूनुःसत्या२३ऽ२३ । स्य४सा४ऽ५त्प५ता५यि५म्५ । सूनुःसत्या२३ऽ२३ । स्य४सो४वा५ । पा४ऽ५तो५६हा५ यि५ ॥ २२ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३१ २र ३ २ ३ १ २ ३ १ २ २ ३ १ २ ३ २
१६९.कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥

वाचस्सामनी द्वे—

१. क५या५न५श्ची५ । त्र२आभू२३वा२त्२ । ऊ२तायिस२ । दा । वार्द्ध२स्सा३२३४खा५ । कयाशा२३ची२३ । ष्ठाऽ२३या४ऽ३ । वा२३४५र्त्तो५६हा५यि५ ॥ २३ ॥

२. होऽ५वाऽ५यि५ । होऽ५वाऽ५यि५क५याऽ५न५श्चि५ । त्र२आभू२३ वा२३४त्४ । होऽ५वाऽ५यि५ । होऽ५वाऽ५ऊ५तीऽ५स५दा५ । वृ२धास्सा२३खा२३४ । होऽ५वाऽ५यि५ । होऽ५वाऽ५यि५क५याऽ५ सं५[१]चा५यि५ । ष्ठ२या । वाऽ२त्तां३२३४अ५ होऽ५वा५ । ऊ३२३४पा५ ॥ २४ ॥

३. का३ऽ५याऽ५ । न५श्चा४ऽ३यि३त्रा२३आ४भू४वा५त्५ । ऊ । ती स२दावृध२स्स । खा । अ२३हो३हा२यि२ । कयाऽ२३श३ चा२यि२ । ष्ठ३यौ३हो२३ । हुंमा४२ । वाऽ२र्त्तो२३ऽ५हा२ यि२ ॥ २५ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७०. त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥

सत्रासाहीये द्वे—

१. त्य५मु५वा५ः । स२त्रा२साहा४२म्२ । विश्वासु गीरिषूआ२ऽ याता४२म्२ । आच्याऽ२३ । वाऽ२या३२३४अ५हो५वा५ । सि२यू२३तयेऽ२३४५ ॥ २६ ॥

२. त्या२३४म्४ । उ४व५स्स५त्रा५सा४ह५म्५ । ओ५६वा५ । विश्वासु गीर्ष्वाया४२ताम् । आ४२च्यावाऽ२३या२ । सियौ३हो२ । वा३हा२३४ऽ३यि३ । ताऽ२३४यो५६हा५ यि५ ॥ २७ ॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७१. सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥

---

१. अत्र सकारस्य स्थाने शकारः स्यात् । —सम्पादकः

१. सा४दा५ । सस्पतायिमॅद्भुता२ु । ओ३२३४वा५ । प्राया२ुओ३२ ३४वा५ । आयिंद्रा । स्या का२ुमा३२३४५या५६५६मृ६ । स२ निम्मे२ॅधामया२सि२षा३२३४५मृ५ ॥ २८ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७२. ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः । उत श्रोषन्तु नो भुवः ॥

१. हा२यि२ । आ२ऽप्सू२ुदा३२३४क्षा५ः । २ । ये२ते२पं२था२ आ२३धोदिॅवाऽ२३४५ःहा२यि२ । आ२प्सू२ुदा३२३४क्षा५ः । २ । ये२ भि२र्व्य२श्वा२३मायिरॅयाऽ२३४५ः । हा२ुयि२ु । उ३ता२ुश्रो३२३४षा५ । तु२नोऽ२३ । भूऽ२ुवा३२३४अ५ हो५वा५ । ई३२३४ती५ ॥ २९ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७३. भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो । यदिन्द्र मृडयासि नः ॥

सोमसामम्—

१. भ५द्रं५भा४द्रा५मृ५ । न२आभाऽ२३रा२३ । आ४यि४षा५मू४ र्जा५मृ५ । श२तक्राऽ२३ता२३उ३ । या४दिं५द्रा४मृ५ । डाऽ२ु या३२३४अ५हो५वा५सी३२३४ना५ः ॥ ३० ॥

ऋषिः—बिन्दुः पूतदक्षो वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७४. अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥

१. अ३स्ति४सो३मो४अ४य३ॅसु४त३ः । अ४ । स्ते४आ४स्ति५ । सो३ मो४अ४य३ॅ३सु४त३ष्पि३ब४न्त्य५स्य५म५ । रु३तो३२ ३४हा५ यि५ । उ४त४स्व४रा४ऽ५जो४वा५ । श्वा४ऽ५यि५ नो५६हा५ यि५ ॥ ३१ ॥

ऋषिः—इन्द्रमातरो देवजामयः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
१७५. ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । वन्वानासः सुवीर्यम् ॥

त्वाष्ट्रीसामम्—

१. ई॒५ङ्खय॒५यं५त्तीप॒५५: । अ२पा४२ुस्यूवा४२ुः । आयिंद्रञ्जा२त२म्२ । ऊपा२ऽसाता४२ुयि२ । व२न्वाना॒ऽ२३सा२ः । सु२वीरिया२३ऽउवाऽ२३ । वृ२धेऽऽ ॥ ३२ ॥

ऋषिः—गोधा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २र ३ १ २
१७६. न कि देवा इनीमसि न क्या योपयामसि । मन्त्रश्रुत्यं चरामसि ॥

गोधासामम्—

१. न५कि५दे॒५वा५ः । इ२नायि । इनीमासा२३यि३ । मासीइँया२ । न५कि५या॒५यो५ । प२या । पयामासा२३यि३ । मासीइँया२ । मं५त्र५श्रु५त्या५म्५ । च२रा । चरामासा२३यि३ । मासीइँया२ ॥ ३३ ॥

ऋषिः—दध्यङ्ङाथर्वणः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ १ २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१७७. दोषो आगाद् बृहद्गाय द्युमद्गामन्नाथर्वण । स्तुहि देवं सवितारम् ॥

१. दो॒४षो॒५आ॒५गा४त्४ । बृ२हद्गा॒या । द्युमद्गाऽ२३मा२न्२ । आ॒थर्व्व३णा२३ । स्तु२हि । औइँहो२३४यि४ । दे॒२वा२३म्३ । स४वो४वा५ । ता४ऽ५रो५६हा५यि५ ॥ ३४ ॥

ऋषिः—प्रस्कण्वः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ २ ३ १ २र ३क २र ३ २ ३ २ ३ १ २ ३ २
१७८. एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥

एषस्सामम्—

१. एृ५षो५उ५षा५: । आपूर्व्विर्या२ । व्युच्छरति२ । होवा२३हा२ यि२ । प्रि२यादाऽ२३यि३वा२३४: । स्तु३षा२३यि४वा३ मा२३ । शिव२नोऽ२३४वा५ । ब्रे४ऽ५होे५६हा५यि५ ॥ ३५ ॥

[ इति ] अर्द्धप्रपाठकः ॥

ऋषिः—गोतमः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१७९.इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥

१. इंद्रोदधीचो अस्थभिरिया४२ुई३ॅया२ । वृ२त्राण्यप्रतिष्कुत इया४२ुई३ॅया२ । ज२घान नवतीर्न्नव इया४२ु । ईऽ२ु । या३२ ३४ । अ५हो५ वा५ । ऊ३२३४पा५ ॥ १ ॥

२. इं५द्रो५द५धा५यि५ । चो२ुअ२स्था३२३४भी५: । वृ२त्राणिया । प्रा२तिष्कुताः । ज२घानाऽ२३ना२ु । व३त्तीर्न्न२वा । अ२३हो४ वा५ । हो४ऽ५यि५ । डा५ ॥ २ ॥

ऋषिः—मधुच्छन्दाः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८०.इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा ॥

१. इं५द्रे५हि५मा५हा५उ । त्सी२३आन्धा२३सा२: । वायिश्वे२ भि२स्सोऽ२३हा२३ । माप२र्व्वा३२३४भी५: । महाऽ२३ । आऽ२ुभा३२३४अ५हो५वा५ । ष्टि२रोजसा३२३४५ ॥ ३ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८१.आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । महान्महीभिरूतिभिः ॥

१. आ३तू२उअ३हो५। २। न२इंद्र२वृत्रा ऽ२३४हा५न्५। अ२स्मा क२मर्द्ध२म्२। आगा ऽ२३ही२। गाही४२उ। माहा४२उन्माही ऽ२३। भि२रू ऽ२३४वा५। ता४ऽ५यि५भो५६हा५यि५॥ ४॥

ऋषिः—वत्सः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१८२. ओजस्तदस्य तित्विष उभे यत् समवर्तयत्। इन्द्रश्चर्मेव रोदसी॥

१. हा५। हा२उ२वा२३। ओजस्तदस्य२ति२त्वि२षे२ऽ२३४। हा५। हा२उ२वा२। उ२भेयत्समवर्त्त २या३२३४त्४। हा५। हा२उ२-वा२३। इंद्रश्चर्मेॅ२व२रोदसी३२३४५:॥ ५॥

२. ओ४ज४स्त४दा४ऽ५स्य५ति५त्वि४षा४इयि४। उ२भेयत्सम वर्त्तयादा२ऽयिंद्र ऽ२३:। चा ऽ२उर्म्मा३२३४अ५हो५वा५। व२ रोदसी३२३४५॥ ६॥

ऋषिः—शुनःशेपः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१८३. अयमु ते समतसि कपोतइव गर्भधिम्। वचस्तच्चिन्न ओहसे॥

१. अ४या३ऽ५मु५। ता४ऽ३यि३सा२३मा४त४सा५यि५। कापो त२इ२। व२गार्भा२ऽधीं४२उम्। वाचा४२उस्ताच्ची ऽ२३त्३। न२ओ ऽ२३४वा५। हा४ऽ५सो५६हा५यि५॥ ७॥

ऋषिः—वातायन उलः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१८४. वात आ वातु भेषजं शम्भु मयोभु नो हृदे। प्र न आयूंषि तारिषत्॥

प्रतीचीनेदं कांक्षीतम्—

१. वा४त५आ४वा५तु५। भा४ऽ५यि५ष५जा४म्४। शांभुम२ य२:। भु२नोर्हृदा ऽ२३४यि४। हा३हो२यि२। प्रनआयूंःषी२३ ता२। रि२षात्। औ ऽ२३हो४वा५। ई४डा५॥ ८॥

ऋषिः—कण्वः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८५.यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । न किः स दभ्यते जनः ॥

१. य४ः४र४क्ष५न्ति५प्र४चे५त५सा४ः । वरुणोमित्रोअर्याऽ२३ मा२ । नाकायिस्साऽ२३दा२ । हुम्माये२३ । भ्याऽ२ुता३२३४ अ५हो५ वा५ । जा३२३४ना५ः ॥ ९ ॥

ऋषिः—वत्सः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८६.गव्यो षु णो यथा पुराश्वयोत रथया । वरिवस्या महोनाम् ॥

१. ग५व्यो४षु४णो५य४था५पु५रा४ । अ२श्व२यो२तरथा । याव२ रि२व२स्या । म२ । होमाऽ२३ । हो३ना२३४अ५हो५वा५ । ऊ३२३४पा५ ॥ १० ॥

२. ग५व्यो५षु५णो५य५था५पु५रा५६ए५ । अ२श्व२यो२ऽतरथा ४२ु । या । व२रिवा४२ुस्या । म२हो । महोऽ२ना३२३४अ५हो५ वा५ । ई३२३४५ ॥ ११ ॥

ऋषिः—वत्सः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८७.इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषीः ॥

शैखण्डिनम्—

१. इ५मा५स्त५इ । न्द्र२पृश्नयो घृतं दूइॅहा२ु । अ३होइॅहा२३ । हा२३ यि३ । ताआऽ२ुशा३२३४यि४रा५म्५ । ए३ना२३४मृ३ता२३ । स्य२पोऽ२३४वा५ । प्यू४ऽ५षो५६हा५यि५ ॥ १२ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१८८.अया धिया च गव्यया पुरुणामन्पुरुष्टुत । यत् सोमेसोम आभुवः ॥

१. अ५या५धि५या५च५ग५व्या५६या५। पुरुणा२३। म२न्२ु पू३२३४रू५।ष्टूतौ२।वा२३ऽ२।य२त्सो२मे३सो२म३आ२। यासोमैं२सो।मऽओऽ२३४वा५।भू४ऽ५वो५६हा५यि५॥१३॥

ऋषिः—मधुच्छन्दाः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१८९.पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः॥

१. पा५व५का५न५ई४या५।स२रास्वा२ऽती४२ु।वाजेभि२र्वा२। जि२नायिवा२ऽती४२ु। [1]यंज्ञाऽ२३म्३।वाऽ२ुष्टु३२३४अ५ हो५वा५।धि२यावसू३२३४५ः॥१४॥

ऋषिः—वामदेवः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१९०.क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात्। स नो वसून्या भरात्॥

१. क४इ५म४म्४। उ५हु४वा४हा५यि५। ना२हू२३षायिषू२ऽ वा४२ु। आयिंद्र२सोम२। स्य२तार्प्या२ऽया४२ुत्२। सनो२ वसू२।नि२याभा२ऽरा४२ुत्२।सानो२वसू२नि२।आऽ२३। भ३रा२उ२वा२।आगहि२येहिताइमे२ऽ॥१५॥

ऋषिः—इरिम्बिठिः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

१९१.आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो मम॥

सौमेरम्—

१. आ५या५हि५सू५।षु२माहा२ऽयिते४२ु।२।आइंद्रसोम२म्२। पि२बाइम२म्२। पि२बाआ२ऽयिमाऽ२ुम्२ु।ए३दं३ब२र्ह२ हायिः।स२दोमाऽ२३मा२३४ऽ३।ओऽ२३४५यि५।डा५।१६।

---

१. मूलग्रन्थेऽत्र 'जंज्ञा......' इति लिखितम्। —सम्पादकः

ऋषिः—वारुणिः सत्यधृतिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१९२.महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥

१. म३हा२उयि२उत्रा३२३४यि४णा५म्५ । अवा४२उरस्तू । द्यु३क्षं२ मा३२३४यि४त्रा५ ।स्या४२उर्यम्णाः ।दु३रा२उधा३२३४ऋ४षा५ म्५ ।व२ रौहो ऽ२३४ ।वा५ ।णा४ऽ५स्यो५६हा५यि५ ॥ १७ ॥

२. म५हि५त्री२णा५म५व५र५स्तू५६ए५ ।द्यु२क्षं मित्रस्यार्यम्णाः । दु२राधाऽ२३ऋ३षा२म्२ ।व२रौहो४२उ ।हुम्मा४२उ ।ण२ ।स्योऽ२उ । या३२३४अ५हो५वा५ ।हा२ओवा२ ।ओवा३२३ ४५ ॥ १८ ॥

ऋषिः—वत्सः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१९३.त्वावतः पुरूवसो वयमिन्द्र प्रणेतः । स्मसि स्थातर्हरीणाम् ॥

धरासाकामाश्वम्—

१. त्वावतो२३ ।हौ३ऽहो२३ऽयि ।पुरूव२सो२३ ।हौ३ऽहो२३ऽयि । व२यमिंद्रा२३ ।हौ३ऽहो२३ऽयि ।प्रणेता२३ः ।हौ३ऽहो२३ऽयि२ । स्मसि स्था२ता२३ः ।हौ३ऽहो२३ऽयि ।हरीणा२३म्३ ।हौ३ऽहो२३ ऽ२३४५यि५डा५ ॥ १९ ॥

ऋषिः—प्रगाथः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१९४.उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥

यामम्—

१. उ५त्वा५मं५दं५तु५सो५हो४मा५ः ।कृ२णौहो ।ष्व२रौहोधा२ अद्रिवाः ।अ ।वब्राऽ२३ह्मा२ ।द्विषा४२उः ।हा४२उ यि२ ।अ३हो २३ऽये२३ । जाऽ२उहा३२३४अ५हो५वा५ । ए२३ । ययूऽ२३ ४५ः ॥ २० ॥

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २ ३ २उ ३ १ २ २ ३ १ २ ३ १ २र
१९५.गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥

हरिश्रीनिधनम्—

१. गि४र्व्वं४ण५ष्या५हि४न५सु५त४म्४ । गि४र्व्वं५ण५ष्या४ । हिनस्सुता४२ । म्२ । मधोर्धाराभि२राहो४२ । ज्यासेऽ२३ । हा२उ२वा२ । इंद्रात्वा ऽ२३दा२ । त२माये२३त्३ । याऽ२शा३२३४अ५हो५वा५ । ह२री२३श्रीऽ२३४५: ॥ २१ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ २ ३ १ २ ३ २उ ३ १ २र ३ २ २ ३ २ ३ २उ ३ १ २
१९६.सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् । न देवो वृतः शूर इन्द्रः ॥

वैतहव्यम्—

१. सा४दा५ । व२इं२द्रा२३: । च२र्कृषा४दा५ । उ२पो२नु२सा२३: । सापर्य२न्२ । न३दे२वाऽ२३: । वृ३ता२३४ऽ३: । शू२३४ऽ३ । रा२३आ४ऽ५यिं५द्रा५६५६: ॥ २२ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २ ३ १ २ ३ १ २ २उ ३ १ २
१९७.आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्राति रिच्यते ॥

आसितम्—

१. आ५त्वा५वि५शं५त्विं५दा५६वा५: । स२मु२द्रमिव२सिंध२व२: । स२मु२द्रमि । व२सिंधऽ२३वा:२ । न त्वामिद्रातिरि२च्य२ते । न२त्वामाऽ२३यिं२द्रा२ । ति२रिच्याऽ२३ताऽ२३४ऽ३ । यि३ । ओऽ२३४५यि५ । डा५ ॥ २३ ॥

ऋषिः—मधुच्छन्दाः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ २ ३ १ २
१९८.इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥

१. इं५द्र५मि३द्गा२थि३नो४बृ५हा५त्५ । इं२द्रामर२क्कीयि । भिर
र२क्किर्कणाः । इं२द्रंवाणी२३ः । हा२३हा२यि२ । अ४नू४ऽ५ष५
ता५ । हो४ऽ५यि५ । डा५ ॥ २४ ॥

ऋषिः— श्रुतकक्षः ॥ देवता— इन्द्रः ॥ छन्दः— गायत्री ॥ स्वरः— षड्जः ॥

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१९९.इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम् । वाजी ददातु वाजिनम् ॥

१. इं४द्र५इ५षे४द५दा५तु५न५ः । ओ४हा४यि४ । ऋ२भु२ । क्षणऽ२
म्२ । ऋ३भु२ऽ२रा३२३४यी५म्५ । वा२जी२द२दा२तु३
वा२३ । वा२जीददा । तु२वोऽ२३४वा५ । जा४ऽ५यि५नो५६
हा५ यि५ ॥ २५ ॥

२. इं५द्र५इ५षे५द५दा५तु५ना५६ए५ । ऋ२भु२क्षणमृ२ । भू४२ऽ
२३म्३ । र३यी२३४ऽ३म्३ । वाऽ२३जी२ । द२दा४२ओऽ२३ ।
तु४वो४वा५ । जा४ऽ५यि५नो५६हा५यि५ ॥ २६ ॥

ऋषिः— गृत्समदः ॥ देवता— इन्द्रः ॥ छन्दः— गायत्री ॥ स्वरः— षड्जः ॥

१ २ ३ २ ३२ ३ २ ३ १ २र २उ ३ १ २र
२००.इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥

अभयंकरः—

१. इं५द्रो५अ५ङ्गा५ । म२हद्भऽ२३या२म्२ । आभी२ष२द२ ।
प२चुच्याऽ२३वा२३४त्४ । स३हा२३४यि४स्थि३रा२३ः । वि४
चो४वा५ । षा४ऽ५णो५६हा५यि५ ॥ २७ ॥

ऋषिः— भरद्वाजः ॥ देवता— इन्द्रः ॥ छन्दः— गायत्री ॥ स्वरः— षड्जः ॥

३ १ २ ३ १ २ ३ १ २ ३ १२ १ २ ३ २उ ३ १ २
२०१.इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः । गावो वत्सं न धेनवः ॥

त्वाश्रीसामम्—

१. इ५मा५उ५त्वा५ । सु५ता२यि२सुतायि । नक्षंता ऽ२३यि३गी२ ३४ः । व४न५ः । गा२३यि३रा२ः । गावोवा२३त्सा२३म्३ । न२धो ऽ२३४ ऽवा५ । ना४ ऽ५वो५६हा५यि५ ॥ २८ ॥

ऋषिः—भरद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ २ ३१ २ ३२ ३ १२ ३ १२ ३२३ १२
२०२.इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥

१. इं५द्रा५नु५पू५ । ष२णावा ऽ२३या२म्२ । साख्याय२ । सु२वस्ता ऽ२३या२यि२ । हूवे४२मावा ऽ२३ । ज२सो ऽ२३४वा५ । ता४ ऽ५ यो५६हा५यि५ ॥ २९ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ १ २र ३ १ २र २ ३२उ ३ २
२०३.न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् । न क्येवं यथा त्वम् ॥

१. न४ । क्ये४ना४की५ । आयिंद्रत्वदुत्तराम् । न२ ऽज्यायो२ । अस्ता ऽ२३यि३वृ२ । हुं३ । हुं२ । त्रा३२३४हा५न्५ । नक्ये२ । वंया ऽ२३था२ । हुं३ । हुं२३४ ऽ३म्तू२३४५वो५६हा५ यि५ ॥ ३० ॥

ऋषिः—त्रिशोकः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३१ २ ३ १ २ ३१ २र ३ १ २ ३ २३१ २
२०४.तरणिं वो जनानां त्रदं वाजस्य गोमतः । समानमु प्र शंसिषम् ॥

१. त५र५णि५वा५ः । जना ऽ२३ना२म्२ । त्र२दंवाजा२३हा२३ । स्या गो२मा३२३४ता५ः । स२माना ऽ२३मू२ । प्र४शा४ ऽ५ंसि५ षा५म्५ । हो४ ऽ५यि५ । डा५ ॥ ३१ ॥

ऋषिः—मधुच्छन्दाः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

१ २ ३ २ ३ २ ३ १ २र ३ १ २ ३ १ २र
२०५.असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। सजोषा वृषभं पतिम्॥

वैरूपम्–

१. अ५सृ५ग्र५मा५इं५द्रा५६ते५गि५रा५ः। प्राती४२ुत्वामू४२ुत्। अ२हा२। सता। साऽ२जो४२ुषावा४२ु। ष२भ४२ुम्२पति२ म्२। ओऽ२३४५यि५डा५॥ ३२॥

ऋषिः—वत्सः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २ ३ २उ ३ १ २
२०६.सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा। मित्रास्पान्त्यद्रुहः॥

१. सु४नी४थो४घा४ऽ५स५म५र्त्ति४या४ः। यंमरुतो२ंयमर्य२मा। मि२त्रास्पान्त्य२द्रुह२ः। ऊ। ऊ। वा२हा२३ऽउवा४२ु। अति२ द्विषा३२३४५ः॥ ३३॥

ऋषिः—त्रिशोकः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२ ३ १ २ ३ २ ३ १ २र ३ १ २ १ २ ३ १ २र
२०७.यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्। वसु स्पार्हं तदा भर॥

तौभम्–

१. अ२हो२वा२अ२हो३२३४वा५। ओ५६हा५। य२द्वी२डा२वी२३ न्द्रा ४ऽ३य२त्स्थि३रा५यि५। अ२हो२वा२अ२हो३२३४वा५। ओ५६ हा५। य२त्प२र्श२शा२ने२३पा४ऽ३रा२भृ३त५म्५। अ२हो२वा२अ२हो३२३४वा५। ओ५६हा५। व२सु२स्पा२ र्हा२३न्ता४ऽ३दा२ु भ३र५। अ२हो२वा२अ२हो३२३४वा५। ओ५६हा५। हो४ऽ५यि५ डा५॥ ३४॥

ऋषिः—सुकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

३ १ २ ३१ २ ३ १ २र ३ २ ३ २ ३ १ २ ३२
२०८.श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम्। आशिषे राधसे महे॥

श्रौतम्—

१. श्रु५ता४म्४वो। वृत्रहंतमम्। प्रशर्द्धं च ऋष२णाऽ२३
यि३ना२म्२।आ२शायिषाऽ२३यि३रा२ु।ध३से३महा।अ२३
हो४वा५।हो४ऽ ५यि५डा॥ ३५॥

[ इति ] पञ्चमप्रपाठकः॥

ऋषिः—वामदेवः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२०९.अरं त इन्द्र श्रवसे गमेम शूर त्वावतः।अरं शक्र परेमणि॥

आभीश्यवम्—

१. अ५र५न्त५इ५द्र५श्र५व५से५।ए५ग२मायिमशू२र२त्वावता२
३ः।होवा२३हा२यि२।अराꣳशा२ऽक्राऽ२३होवा२३हा२यि२।
प२ रायिमाऽ२३णा२३४ऽ३यि३।ओऽ२३४यि५।डा५॥ १॥

ऋषिः—विश्वामित्रः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२१०.धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्।इन्द्र प्रातर्जुषस्व नः॥

१. धा५ना५वं३त२ुङ्क३र४म्भि५णा५म्५।अपूपवंतमू२ऽक्थी२३
ना२म्२।इं२द्रा२ुप्रा३२३४ता५ः।ओ३२३४हा५यि५।जु४षो४
वा५।स्वा४ऽ५नो५६हा५यि५॥ २॥

ऋषिः—गोषूक्त्यश्वसूक्तिनौ॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२११.अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः।विश्वा यदजय स्पृधः॥

क्षुरपविम्—

१. अ५पा४म्फे४ने५न५न४मु५चे४ः। शिरइ२। द्रोत्। अ॑वाऽ२ु
र्त्ता३२३४या५ः। वायिश्वाऽ२३। याऽ२ुदा३२३४अ५हो५
वा५।ज२य२स्पृधा३२३४५ः॥ ३॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१२.इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः । तेषां मत्स्व प्रभूवसो ॥

१. इ५मे५त५आ । द्र२सोमाः । होवा२३होयि । सु२तासोये२३ । चासो२तू३२३४वा५ः । ते३ऽ४षा५म्५ । हा२३हा२यि२ । मात्स्वप्र२भूऽ२३४वा५ । वा४ऽ५ । सो ५६हा५यि५ ॥ ४ ॥

ऋषिः—श्रुतकक्षः सुकक्षो वा ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१३.तुभ्यं सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो । स्तोतृभ्य इन्द्र मृडय ॥

१. तु४भ्य४ऽ४हा५उ५ । सु२तासस्सोमाः । स्तीर्णम्बाऽ२३ऋ३ही२ः । विभा४२हो२ऽयि । वाऽ२३सा२उ२ । स्तोता२३उ३वा२३ । भ्यआऽ२यि२ । द्र३म्रे२३४अ५हो५वा५ । डा३२३४या५ ॥ ५ ॥

ऋषिः—शुनःशेपः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१४.आ व इन्द्रं कृविं यथा वाजयन्तः शतक्रतुम् । मंहिष्ठं सिञ्च इन्दुभिः ॥

कौत्से द्वे—

१. आ५व५इं५द्रा५म्५क्रि२विंयथा । वाजयाऽ२३न्ता२ः । श२ताक्रतुम् । मं२हिष्ठाऽ२३२सी२ । चायाउ३वा२३यि३ । दू३२३४भी५ः ॥ ६ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१५.अतश्चिदिन्द्र न उपा याहि शतवाजया । इषा सहस्रवाजया ॥

१. अ५त५श्चि५दिं५द्र५न५उ५पा५६ए५ । आयाहि२श२ । त२वाजाऽ२३या२३४ । इ२षा२३४स३हा२३ । स्त्र२वोऽ२३४वा५ । जा४ऽ५यो५६हा५यि५ ॥ ७ ॥

ऋषिः—त्रिशोकः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१६.आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम् । क उग्राः के ह शृण्विरे ॥

औषसम्—

१. आ५बुं५दं५वृ५ । त्र२हाद । दायि । जातष्पृच्छा२३त् । विमा ऽ२ु ता३२३४रा५म्५ । क२उग्रा ऽ२३ष्के२ । हाशृण्विर२ेर२ । इडा ऽ २३भा२३४ ऽ३ । ओ ऽ२३४५यि५ । डा५ ॥ ८ ॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१७.बृबदुक्थं हवामहे सृप्रकरस्नमूतये । साधः कृण्वन्तमवसे ॥

भारद्वाजम्—

१. बृ५ब५दु५क्थ५ऽ५हा५६वा५म५हा५यि५ । साप्र्रा४२ुकारा ४२ु । स्न२मू२ । तयायि । सा२ऽधा४२ुष्काण्वा ऽ२३ । त२मो ऽ२ ३४वा५ । वा४ऽ५सो५६हा५यि५ ॥ ९ ॥

ऋषिः—गोतमः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१८.ऋजुनीती नो वरुणो मित्रो नयति विद्वान् । अर्यमा देवैः सजोषाः ॥

कौत्ससामानि—

१. ऋ५जु५नी५ती४नो५व४रु५ण५ः । इ४हा४ । मि२त्रोनयति२ विद्वा ऽ२३न्त्सा२ः । इहा२ । अ२र्या२मादा ऽ२३यि३वा२यि२ । इहा२ । सजोषा२ँउ३वा२३ । ई२३४हा५ ॥ १० ॥

ऋषिः—ब्रह्मातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२१९.दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् । वि भानुं विश्वथातनत् ॥

औषसम्—

१. दू२रादी॒ऽ२३हे४व४य५त्स५ता५ः। अ२रु२णप्सु२शिश्वाऽ२३यि३ता२त्२। वि२भानूऽ२३म्वि२। श्वाथा२न२त्२। इडाऽ२३भा२३४ऽ३। ओऽ२३४५यि५। डा५॥ ११॥

ऋषिः—विश्वामित्रो जमदग्निर्वा॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२२०.आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू॥

१. आ३नो४मि५त्रा५। व२रु२णा२३। अ२होवाऽ२३४घृ४तै३र्ग्ग३व्यू४ति५मु५। क्ष२ता२३म्३। अ२होवा४२। माध्वा२रजा२ँ२सि२सू२३। अ२होवा४२। क्र२तू२। इडाऽ२३भा२३४ऽ३। ओऽ२३४५यि५। डा५॥ १२॥

ऋषिः—प्रस्कण्वः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२२१.उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत। वाश्रा अभिज्ञु यातवे॥

मरुत्सामम्—

१. उ५दु५त्त्ये५सू५ना५६वो५गि५रा५ः। काष्ठा२य२। ज्ञायि। षुँवाऽ२त्ना३२३४ता५। वा२श्राआऽ२३भी२३। ज्ञूऽ२३या४ऽ३। ता२३ ४५वो५६हा५यि५॥ १३॥

ऋषिः—मेधातिथिः॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२२२.इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूढमस्य पाँसुले॥

विष्णुसाम—

१. इ५दा५६मे५। विष्णूऽ२ः। वि३च२क्रा३२३४मा५यि५। त्रायिधानि२। द२धायिपा२ऽदा४२म्२। समू४२होर२ऽऽ। ढाऽ२३मा२३। स्याऽ२पा३२३४अ५हो५वा५। ए२३। सु२ले२ऽऽ॥ १४॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२२३.अतीहि मन्युषाविणं सुषुवांसमुपेरय। अस्य रातौ सुतं पिब॥

कौत्सप्रम्—

१. अ५ती५हि५मा५। न्यु२षा४२वायिणा४२म्२। सु२षु२वां सा४२म्२। होयि। ऊपै२ऽराया ऽ२। अ३स्य३रा२ताऽ२३उ३। सूऽ२ता३२ ३४अ५हो५वा५। पी३२३४बा५॥ १५॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२२४.कदु प्रचेतसे महे वचो देवाय शस्यते। तदिद्ध्यस्य वर्धनम्॥

काश्यपम्—

१. क३दु४प्र३चे४त५से५। म३हा२३यि३। वाऽ२३४चो५दे५वा५ हा५उ५। व४चो४दे५वा५। य२शस्याऽ२३ता२३४यि४। त३ दा२३४यि४द्धि३या२३। स्य२वोऽ२३४वा५। धा४ऽ५नो५६ हा५यि५॥ १६॥

ऋषिः—मेधातिथिप्रियमेधौ ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२२५.उक्थं च न शस्यमानं नागो रयिरा चिकेत। न गायत्रं गीयमानम्॥

बार्हदुक्थे द्वे—

१. उ५क्थं४च५नो४हा४यि४। श२स्यमानम्। नागोराऽ२३यी२ः। आचिकेता। न२गायाऽ२३त्रा२म्२। गी२। यमाऽ२ना३२३४ अ५हो५वा५। ऊ३२३४पा५॥ १७॥

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२२६.इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः। हरिवान्त्सुतानां सखा॥

१. इं५द्र५उ५क्था५यि५।भिरम्मान्दायिष्ठोर३।वाजा२ुना३२३४ ञ्आ५।वाजपरतिरः।हराऽरयि२ुवा३२३४न्त्सू५।तानारॅं रस।खा।अर३होऽवा५।हो४ऽ५यि५।डा॥ १८॥

ऋषिः—मेधातिथिप्रियमेधौ॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२२७.आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः। महाँइव युवजानिः॥

कौत्सानि त्रीणि—

१. आ४या५ही४।उपनरस्सुरतम्।होवार३हारयिर।वाजेरॅंभिर म्मार्हृणीरयरथार३ः। होवार३हारयिर। मरहाॅंइवर युवाऽर३।होवार३हार३यि३।जाऽर२ुना३२३४अ५हो५वा५। ऊर३ऽर३४ पा५॥ १९॥

ऋषिः—कौत्सो दुर्मित्रः सुमित्रो वा॥ देवता—इन्द्रः॥ छन्दः—गायत्री॥ स्वरः—षड्जः॥

२२८.कदा वसो स्तोत्रं हर्यत आ अव श्मशा रुधद्वाः। दीर्घं सुतं वाताप्याय॥

१. ओ४र२ु होरऽयिऽ।कदा२ुव३सो५।स्तोत्रार३म्३।हरर्य३ता४ आ५। ओ४र२ु होऽयि। अ३व२ुश्म३शा५।रु३धा२ुदू३२३४ वा५ः।ओ४र२ुहोरऽयि।दी३र्घंॅर२ुसु३त५म्५।वा३तार३४ऽ३। पीर३ या४ऽ५या५६५६।ई३२३४५॥ २०॥

२. क३दार३४अ३हो४वा५।वसो।स्तोत्रार३म्३।हरर्य३ता४ आ५।अवार३४।अ३हो४वा५।श्मशाऽर२ु।रु३धा२ुदू३२३४ वा५ः।दी३र्घार३४अ३हो४वा५।सुताऽर३म्३।वा३तार३४ऽ ३।पीर३या४ऽ५या५६५६॥ २१॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२२९.ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेदं सख्यमस्तृतम् ॥

औद्ध्र्वसद्मने द्वे—

१. ब्रा५ह्म५णा५दी५ । द्र२रा२धसाः । पि२बा२सोमा४२म्२ । ऋ२तूः२रनू । त२वे२दाःसाऽ२३ । ख्याऽ२३मा४३ । स्ता२३४५ त्तों५६हा५यि५ ॥ २२ ॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२३०.वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपाः ॥

१. व५यं४घा५ते५अ४पि५स्म५सा४यि४ । स्तो२ता२ इंद्रगिर्व्वणाः । ववाऽ२३होयि । तूवन्नोजी४२ । ववाऽ२३हो । न्व२सोऽ२३ । माऽ२पा३२३४अ५हो५वा५ । ए२३ । उपा३२३४५ ॥ २३ ॥

ऋषिः—विश्वामित्रो गाथिनोऽभीपाद उदलो वा ॥ देवता—इन्द्रः ॥
छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२३१.एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः । सत्राजिदुग्र पौंस्यम् ॥

१. ए५न्द्र५पृ५क्षु५का५सु५ची५६दे५ । नृ२म्णा२म्२ । त२नू२ षू२३धायिहा२ऽयिना४२ः । सात्रा२जि२दु२ । ग्र२पौऽ२३ः३सि३ या२उ२ । वा२३ । ऊ२३४पा५ ॥ २४ ॥

ऋषिः—श्रुतकक्षः ॥ देवता—इन्द्रः ॥ छन्दः—गायत्री ॥ स्वरः—षड्जः ॥

२३२.एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनः ॥

१. ए५वा५हो२३अ४सि४वी५र५यू५ः । ए२वाशू२ऽरा४२ः । उताऽ २३स्थि३रा२ः । आयिवा२ते२रा । धियाऽ२३म्म३ना२उ२ । वा२३ । स्तौ२षे२३४५ ॥ २५ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२३३. अभि त्वा शूर नोनुमोऽ दुग्धाइव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥

१. अ५भि५त्वा५शू५ । र२नोनुँमा४२ुः । ओयिनू२३मा२ः । आदुग्धा२इ२ । व२धायिनँवा४२ुः । ओयिना२३वा२ः । आयिशान२म२ स्य२ज२ग२त२ः । सु२वार्दृश२म्२ । आद्रे२३ शा२म्२ । आयिशान२ मि२ । द्र२तास्थुष२ः । आऽ२३ । स्थूऽ२ु । षा३२३४ । अ५हो५वा५ । स्थु२ष२स्थुषा३२३४५ः ॥ २६ ॥

२. अ५भि५त्वा२३शू४र५नो४नु४मा५ः । आदुग्धा२इ२व२ । धायिनाऽ२३वा२ः । आयिशान२म२स्याजग । ताः । सुँवाऽ२ु द्रैं३२३४शा५म्५ । ई२शानाऽ२३मी२ । द्रातस्थु२ष२ः । इंद्राऽ२३भा२३४ऽ३ । ओऽ२३४५यि५डा ॥ २७ ॥

ऋषिः—भरद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२३४. त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥

भारद्वाजे द्वे—

१. त्वा५मि५द्धी५ । हवा४२ुमहे२ । आ । अ२३हो३वा३हा२उ२ वा२३ । ऊ२३४पा५ । सा२तौ२वा२ज२ । स्या२३का४२ुरव२ः । आ । औ२३हो३वा३हा२उ२वा२३ । ऊ२३४पा५ । त्वांवृत्रायि-षुइ२ । द्र२सा४२ु त्पति२म्२ । आ । अ२३हो३वा३हा२उ२ वा२३ । ऊ२३४पा५ । नरस्त्वाङ्काष्ठा२ । सु२आ४२ुर्व्वत२ः । आ । अ२३हो३वा३हा२उ२वा२३ । ऊ२३ऽ२३४पा५ ॥ २८ ॥

२. त्वा४मि४ब्धि४ह४वा५म५हे।५सा५तौ५वा५जो४वा५।स्याका २ऽरावा४२ुः। त्वावृत्रायिषु इंर्द्र२स२त्२। पातिन्नारा४२ुः। त्वाङ्का२३ष्ठा२। सु२अर्वाऽ२३ता२३४ऽ३ः। ओऽ२३४५ यि५डा५॥ २९॥

ऋषिः—बालखिल्याः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२३५.अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति॥

सान्नते द्वे—

१. अ५भि५प्र५वा५ः। सु२राधाऽ२३सा२म्। इंद्रमर्च्चयाथा२ऽ विदाऽ२३४यि४। यो३जा२३४रि३तृ२३। भ्योमघवापूरू२ऽ वासू४२ुः।सहाऽ२३।स्राऽ२ुयि२ुणा३२३४अ५हो५वा५।व२ शिक्षती३२३४५॥ ३०॥

२. अभायिप्रेवाऽ२ुः।सु३रा२ुधा३२३४सा५म्५।इंद्रामॅर्च्चाऽ२३। याऽ२ुथा३२३४अ५हो५वा५।वी३२३४दे५।योजरि२तृभ्यो२ म२घवा२ॅपु२रू२वसू२ः।स२हा२।स्रे२णे२वा२३शाये२३। क्षाऽ२ुता३२३४अ५हो५वा५।सु२भू२३तयेऽ२३४५॥ ३१॥

श्यैतम्—

३. अ४भि३प्र३व४स्सु५रा५।ध३सा२३४अ३हो४वा५।आयिंद्र-म२र्च्च२। य२थाविदाऽ२३४यि४। ओ५६हा५। योजरि२ तृभ्य२ः। माघाऽ२३वा२। पुरूऽ२ु। वा३२३४सू५ः। स२ हस्रेणायिवा२३शा२।हुंम्माये२३।क्षाऽ२ुता३२३४अ५हो५ वा५।वा३२३४सू५॥ ३२॥

ऋषिः—नोधाः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२३६. तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥

नविकम्—

१. तं४व५ः । ए४दा४स्मा५म्५ । ऋ२ती२षह२म्२ । हा४२ुयि२ । आऔ२३हो२ । इहा२ । वासोर्म्म२दा२नमंध२सा२३ः । हा४२ुयि२ । आअ२३हो२ । इहा२ । अ२भिवत्सन्नस्वसरे२षु२धे२नवा२ँः । हा४२ुयि२ । आअ२३हो२ । इहा२ । इंद्र२म्२ । हा४२ुयि२ । आअ२३ हो२ । इहा२ु । गी३र्भा२ुयि२ुः । ना३२३४अ५हो५वा५ । वामहे३२ ३४५ ॥ ३३ ॥

अभीवर्त्तः—

२. तं५वो४ऽ३दा२३स्मा४मृ४ती५ष५हो४वा५ । वासोर्म्म२न्दा२ । न२मान्धा२ऽसा४२ु । आभिवत्सा२३ऽ२३४म्४ । न३स्व३स४रे५ । षु२धायिना२ऽवा४२ुः । इं२द्राङ्गा२ऽयिर्भी२ुः । न३वा२३ । माऽ२३४५ । हा३२३४५यि५ ॥ ३४ ॥

आभीवर्तम्—

३. तं३वो४द४स्म३मृ४ती५ । ष३हा२ुओ३२३४वा५ । वासोर्म्मन्दानमंधासा४२ुः । आभिवत्सन्न स्वसरेषू धे२ऽनावा४२ुः । ओ३ँवा२ । इं२द्रंगाऽ२३४यि४र्भी५ः । न२वामाऽ२३४५ हा५६५६यि६ । भ२ गा२३याऽ२३४५ ॥ ३५ ॥

नौधसम्—

४. तं३वो५द४स्म३मृ४ती५ । ष३हा२३म्३ । वाऽ२३४ । सो४र्म्म५न्दा५न५म५ । न्धा४सा५ः । अ२भि२व२त्स२न्न२स्व२स२रे२

षू२३धायि। नाऽ२३वा२ः। इन्द्रङ्गीर्भायिन्नी२३वा२। हु३। हुं२३। हुं३॑। हुं२। न२वा२ु न२ुवो३२३४वा५। मा४ऽ५हो५६ हा५यि५॥ ३६॥

५. ताऽ२३४म्४। वो४द५स्म४मृ५ती५। षा४हा५म्५। व२सो-र्म्मन्दा। ना २३माऽन्धा२३सा२ः। आऽ२३भी२। वात्सन्न२। स्वस२। रायि। षूधे२ुना३२३४वा५ः। आऽ२३यिं३द्रा२स२। गायिर्भिन्न२वोऽ२ ३४वा५। मा३२३४हे५॥ ३७॥

[ इति ] अर्द्धप्रपाठकः॥

ऋषिः—कलिः प्रागाथः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२३७. तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम्॥

लौशे द्वे—

१. ता४रो५। भायिर्व्वो[1]वि२दा२३ऽउवाऽ२३। वा३२३४सू५म्५। इंद्राँ२स२बाध२ऊ२तये२॑। बृ२हात्। बृ२हा२३ऽउ। वा४२ु। गायन्त२स्सु२तसो२मे२अ२ध्व२रे। हु२वेभाऽ२३रा२म्२। नाकारि२ण२म्२। इडाऽ२३भा२३ऽ४ऽ३। ओऽ२३४५यि५। डा५॥ १॥

२. ता४रो५। भायिर्व्वोवि२दा२३ऽउवाऽ२३। वा३२३४सू५म्५। इंद्राँ२र२बाध२ऊ२तये२॑। बृ२हाद्गा२ऽया४२ु। तास्सु-तसो४२ु। मे२अध्वरायि। हु२वेभाऽ२३रा२म्२। नाकारि२ण२म्२। इडाऽ२३ भा२३४ऽ३। ओऽ२३४५यि५। डा५॥ २॥

१. मूलगानग्रन्थेऽत्र 'र्नो' इति पाठोऽस्ति। —सम्पादकः

क्षुल्लककालेयम्–

३. त५रो५भि५व्वों५वि५द५द्वा५सू५म्५ । इं२द्रा२म्२ । इं२द्रं२ स२बा२ धा२३ऊता२ऽया४रुयि२ । बृ२हा२त्२ । बृ२ह२द्गा२ यं२त२स्सु२त२सो२मा२३आध्वा२ऽरा४रुयि२ । हु२वा२यि२ । हु२वे२भ२र२न्न२का२रि२ण२म्२ । इडाऽ२३भा२३४ऽ३ । ओऽ२३४५यि५ । डा५ ॥ ३ ॥

कालेये द्वे–

४. त५रो५भि५व्वों५वि५दा५ऽ४द्वा४सू५म्५ । इं२द्रं२स२बा२३ । धऊऽरु ता३२३४या५यि५ । बृ२हात् । बृ२हा२३उ । वा४रु । गायन्त२सु२तसो२मे२अ२ध्व२रे । हु२वेहोयिभाऽ२३रा२म्२ । नाका२रि२ण२म्२ । इऽडाऽ२३भा२३४ऽ३ओऽ२३४५यि५ । डा५ ॥ ४ ॥

कालेये द्वे–

५. तरोऽ२३भि३व्वों२ । वि४दा ४ऽ५द्व५सू५म्५ । इं२द्रं२स२ बा३धाऊ२ऽतायाइँयि३ । ओ२३४वा५ । ओ३२३४वा५ । बृ२ह२द्गा२य२न्तः२सु२त२सो३मा अध्वराइँयि३ । ओ२३४-वा५ । ओ३२३४वा५ । हुवायिभराम् । नाकारुरा३२३४इ-४णा५म्५ । ओऽ२३४वा५ । ओ३२ ३४५यि५ । डा५ ॥ ५ ॥

६. तरोभिव्वोंऽरु । वि३द२द्वा३२३४सू५म्५ । इं२द्रा२रुस२बा३-धाऊ२ऽ ताया४रुयि२ । अइँहो२३वा२ । २ । बृ२ह२द्गा२यं२-तस्सु२त२सो३ माअध्वरा४रुयि२ । अइँहो२३वा२ । २ । हुवायिभा२ऽरा४रुम्२ । अइँ हो२३वा२ । २ । नाकारि२ ण२म्२ । इडाऽ२३भा२३४ऽ३ । ओऽ २३४५यि५ । डा५ ॥ ६ ॥

महाकालेयम्—

७. त५रो५भा२३यि३र्व्वो४वि५द४द्व४सू५म्५। इ२न्द्राःसबा। ध२ऊ३ त२याऽ२३यि३। बृ२ह३द्गा३या२३। ताऽ२३४ः। सु४त३सो४ मे५अ५। ध्वा२३रा२यि२। हुवायिभ३रौ२। वा२३४ऽ३ओ२३४वा५। न४का४ऽ५रि५णा५म्५। हो४ऽ५ यि५। डा५॥ ७॥

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२३८. तरणिरित् सिषासति वाजं पुरन्ध्या युजा।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम्॥

एषिरे द्वे—

१. त५र५णि५री५त्५। सि३षा२३सा४ती५। वा२जाम्पु२राम्। धि२या२युजा। आवा२३आ४यि४न्द्रा५म्५। पु२रूहू२तम्। न२मे२गायिरा। नायिमी२३न्ता४ष्टे५। वा२सुद्रुहाऽ२३४५ म्५॥ ८॥

२. त४रा४हा५उ५। णि२रि२त्सी२३षासति२। ह२या२यि२। २। वाजंपु२र२म्२। धि२यायूजौ२। हो२वा२३हा२यि२। आवइं- द्रम्पु२रु२[१]हू२त२म्२। न२मायिगायिरौ२। हो२वा२३हा२यि२ ने२मिं२त२ष्टे२वा२३सा। अ२३हो३वा३हा२३४औ५हो५ वा५। उ२पू२। हू३२३४वा५म५॥ ९॥

गौरीविते द्वे—

३. त४र३णि४रि३त्सि४षा५। सा२३ती४। वा४जं५पु४रं५ध्या५ यु५जा४। वाजम्पुरन्ध्यायुजा। वआऽ२३यिं३द्रा२३४म्४। पु४ रु४हू४ त३न्न४मे५। गा२३यि३रा२। ने२मायिंताऽ२३ष्टे२। व२ सुद्रुव२म्२। इडाऽ२३भा२३४ऽ३। ओ२३४५यि५। डा५॥ १०॥

१. हस्तलेखेऽत्र नष्टलेखत्वाल्लिपिकर्त्रा 'हु२' इति लिखितः। —सम्पादकः

४. त४र३णि४रि३त्सि४षा५। स३ती२३। वाऽ२३४। जं४पु४र५न्धि५या५। यु४जा५। वाजम्पुरंध्यायुजावइंद्रम्पुरुहूतन्नमा४२ यि२गायिरा४२। हा४२ऊऊवायि। ने२मिन्तष्टेवसोवा२३ओऽ २३४वा५। द्रू४ऽ५वो५६हा५यि॥ ११॥

ऋषिः—मेधातिथिः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२३९. पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः।
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः॥

पृष्ठम्—

१. पि५बा४ऽ३सु२त३स्य४र४सि५ना५ः। मत्स्वाइंद्रगोमताऽ२३ होयिया। आ२पिन्नोंबोधिसधमाद्येवृधाऽ२३होयिया। अ२स्माः आऽ२३वा२। तु२तायिधाऽ२३या२३४ऽ३ः। ओऽ२३४५यि५। डा५॥ १२॥

शौल्कम्—

२. पि५बा५सु५त५स्य५र५सि५नो५हा५उ५। मत्स्वानइंद्र२ गोमाऽ२त३ः। हा२ओ३२३४वा५। आ२पिन्नोंबोधिसधमादि२ येवाऽ२र्द्धे३। हा२ओ३२३४वा५। अ२स्माःअवंतु२तेधाऽ२ य३ः। हा३ओ३२३४ वा५। ई३२३४५॥ १३॥

जमदग्नेरभीवर्तम्—

३. पि५बा५सु५त५स्य५र५सि५नो५म५त्स्वा५हा५उ५। ना४२ः। इन्द्रा४२गोमताऽ२३हा२उ२। आ२पिन्नों२बो२। धि२सार्ध मा४२। दियेवृधाऽ२३। हा२उ२। अ२स्माःअँवाऽ२३। हा२। तु३ते२३होऽ२। या३२३४अहो५वा५। धि२य२तु३२३ ४५॥ १४॥

ऋषिः—भर्गः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२उ ३ १ २ ३ २उ ३ १ २
२४०.त्वं ह्येहि चेरवे विदा भगं वसुत्तये।
१ २ ३ १ २ ३ २ ३ १ २
उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥

कौल्मालाबर्हिषे द्वे—

१. तु५वा४ऽ३ः३होर३ए५हि४चे५र५वा५यि५। वि२दाभगं-वसू४२त्ताया२३४यि४।उ५द्वा५वृ५ष५स्व५म५घा४वा५न्५। ऐ२होयि।गा४२विष्टयायि।उदिंद्राऽश्वमोवा२३ओऽ२३४वा५। ष्टा४ऽ५यो५६हा५यि५ ॥ १५ ॥

२. त्व५ः५ह्यो५हि५चे५रा५६वा५यि५। वि२दाभगंवसूत्ता२ऽ याऽ२३४यि४। उ४द्वा५वृ५ष५स्व५। मा४ऽ५घ५वा४न्४। आयिहि२ यायि।ग२वि२ष्टाया४२यि२।उदिंद्रा४२अश्वमी। ओ२३ऽम्।ओ३२ ३४वा५।ष्टा४ऽ५यो५६हा५यि५ ॥ १६ ॥

ऋषिः—वसिष्ठः ॥ देवता—मरुतः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २र ३ २ ३ १ २र ३ १ २
२४१.न हि वश्चरमं च न वसिष्ठः परिमंसते।
३ १ २ ३ २ ३१ २ ३ २उ ३ १ २ ३ १ २
अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ॥

जनित्रे द्वे—

१. न५हि५वा२३श्चा४र५मं४च४ना५। हु२वेहो४२यि२। वसिष्ठष्परायिमिंःसाता४२यि२। अ२स्माकमद्यमरुताऽ२ः। सु३ता२यि२सा३२ ३४चा५।वायिश्वे२३होयि।पिबा२३हो। तु२काऽ२३। माऽ२ यि२ना३२३४अ५हो५वा। ज२नित्राऽ २३४५म्५ ॥ १७ ॥

२. न३हि३व४श्च५र५म५म्५। च३ना२३। व४सि४ष्ठा५ः। होयि२। परायिमँ२ःसाताऽ२३४यि४। अ४स्मा३क४म४द्य३म४ रु४त५ः। सु३ता२३यि३सा४चा५। वायिश्वेपि२बं२तु२कौ३ॅ। हो२३ऽये२३। माऽ२ुयि२ुना३२३४अ५हो५वा५। ज२नी२३ त्राऽ२३४५म्५॥ १८॥

ऋषिः—प्रगाथः काण्वः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

१ २ ३ १ २र ३ १ २ ३ १ २
२४२. मा चिदन्यद् वि शंसत सखायो मा रिषण्यत।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत॥

मैधातिथम्—

१. मा५चि५द५न्य५दो४हा५यि५। वि३शा२३ः३सा४ता५। सखाया४२ुहो२ऽयि। माअ२३हो२। रायिषा२उ२वा२। ण्याता२ उ२वा२। इंद्रमित्स्तोता वृषणाअ२३हो२। साचा२उ-२वा२। सूता२उ२वा२। मुहुरुक्थाअ२३हो२। च२शा। अ२हो। वा३हो३२३४वा५। सा४ऽ५तो५-६हा५यि५॥ १९॥

ऋषिः—आङ्गिरसः पुरुहन्मा॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२ ३ १ २र ३ २ ३ १ २ ३ १ २
२४३. न किष्टं कर्मणा नशद् यश्चकार सदावृधम्।
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा॥

वैखानसम्—

१. न५कि५ष्टा२३का४र्म्म५णा४न४शा५त५। य२श्चा का२रा। स२दा३ वृ२धाऽ२३म्३। स२दा३वृ३धा२म्२। इं२द्रान्न२या। ज्ञै२ुर्व्वि३श्व२ गूऽतेर्मा२ॅर्भ्व२साऽ२३म्३। त२मृ३भ्व३सा२म्२। अ२धार ष्टं २धा। ष्णु२मो३जसाऽ२३। ष्णु२मो३ज३ सा२३४ऽ३। ओ२३४५यि५। डा५॥ २०॥

गौरूहन्मनम्—

२. न३कि४ष्टं३ङ्क३र्म्म४णा५न५श५त्५। हो२३४यि४। य५श्चच५-का२३रा४स५दा४वृ४धा५म्५। आयिद्रा४२ुन्नाया४२ु। ज्ञैर्व्विश्व गूर्त्तार्मृभ्वासा४२म्२। अधा४२ुहो२ऽ। ष्टाऽ२३ध्रे२३४। हा५ ओ४वा५। ष्णु२मोजसा३२३४५॥ २१॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२४४. य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः॥

ाकर्षम्—

१. य५ऽऋ५ता२३यि३ची४द५भि४श्रि४षा५ः। पूरा४२ुजात्रू४२ु। भ्य२आ२तृदा२३ः। होवा२३हा२यि२। सांन्धा४२ुतासा४२ुम्२। धायिम्म२घवा२ँपु२ँपु२रू२वसु२ः। होवा२३हा२यि२। नायिष्का४२ुर्त्तावी४२ु। ह्रु२तं२पुन२ः। ह्रो। वाऽ२ु। हा३२३४। अ५हो५वा५। ऊ३२३४पा५॥ २२॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

२४५. आ त्वा सहस्त्रमा शतं युक्ता रथे हिरण्यये।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये॥

वत्वारि भारद्वा[जा]नि—

१. आ५त्वा५स५हा५। स्त्र२माशा२ऽता४२म्२। यूक्तार२थे२हिर२रण्य२ये२। ब्रह्मायू२ऽजा४२ुः। हारय२इ२। द्र२कायिशा२ऽयिनाऽ२३४ः। वहांन्तू२ऽसोऽ२३। माऽ२ुपा३२३४अ५हो५ वा५। ता३२ ३४ये५॥ २३॥

२. अ५हो५आ५त्वा५स५हा५६ए५ । स्त्र२माशा२ऽता२ऽ२३४म्४। हा३हो२यि२ । यूक्तार२थे२हि२र२ण्य२ये२ । ब्रह्मायू२ऽजा२ ३४ः । हा३हो२यि२ । हारय२इ२ । द्र२कायिशा२ऽयिना२ऽ२३४ः । हा३हो२यि२ । वहान्तू२ऽसो२ऽ२३४ । हा३हो२ । म३पी२३ । ता२ऽ२३४या४यि४ । उ५हु५वा५६हा५उ५ । वा५ ॥ २४ ॥

३. आ४त्वा५स२ह४स्त्र५मा४श५त४मा४ । यु२क्तारथेहि२रण्यये । ब्र२ह्म२युजोहरयइंद्र२केहो४रुयि२ । शायिना२ऽ२३ः । हा२उ२ वा२ । वहंतुसोम२पौ३हो२३ । हुम्मा२ऽरु । त३या२३यि३ । ओ२ऽ२ ३४वा५ । ऊ३२३४५ ॥ २५ ॥

४. आ३त्वा४स४ह३स्त्र४मा ५ । श३ता२रुम्२ । आ३त्वा४स५हा५ । स्त्र२माशत२म्२ । आ२ऽ२यि२हि२या३२३४हा५यि५ । यूक्तार२-थे२ हि२र२णा२ये२ । ब्रह्मायू२ऽजा२ऽ२३ः । आ२ऽ२यि२हि२ या३२३४हा५यि५ । हारय२इ२ । द्र२कायिशा२ऽयिना२ऽ२३ः । आ२ऽ२यि२हि२या३२३४हा५यि५ । वहान्तू२ऽसो२ऽ२३ । आ२ऽ२-यि२हि२या३२३४हा५यि५ । म२पीता२ऽ२३या२३४ऽ३यि३ । ओ२ऽ२३४५यि५ । डा ॥ २६ ॥

ऋषिः—विश्वामित्रः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २
२४६. आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
२ ३ २ ३ १ २ ३ २उ ३ २उ ३ १ २ ३ १ २
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥

वाम्राणि त्रीणि—

१. आ५मं५द्रै५रा५ । [ यिं— ] द्र२ह२रि२भा२यि२र्या२हि२म२यू२ रा२३रोमाभा२३यि३ः । मा४त्वा५का४यि४ची५त्५ । नि२ये२रु मू३२३४री५त्५ । न२पा२शिनाः । अ२ति२धान्वे४रु । व२ताः२ऽ २३ । आ२ऽरुयि२रुहा३२३४अ५हो५वा५ । वा३२३४या५ः ॥ २७ ॥

२. आ४मं५द्रै४रिं५द्र५। हा४ऽ५रि५भा४यि४ः। या२हि मयूर२ रोमभायिः। मात्वाकाऽ२३यि३ची२त्२। नायिये मु२रि२त्२। न२पाशाऽ२३यि३ना२ः। अ२तायिधाऽ२३न्वे२। व२ताःऽ२३। अऽ२ुयि२ुहा३२३४अ५हो५वा५। व२यो२३भीऽ२३४५ः॥ २८॥

३. आ४मं५द्रै४रिं५द्र५। हा४ऽ५रि५भी४ः। या२हि मयूर२रोम भाउ। वा४२ु। मात्वा४२ु। केचिन्नियेमुरिन्न२पाशिनाउ। वा४२ु। आती४२ु। धन्वेव२ता२३ऽ[1]ऽ२३। ई३२३४हि५॥ २९॥

ऋषिः—गोतमः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२४७. त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम्।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः॥

गौङ्गवम्—

१. त्व५मा२३ः३गा४प्र५श४ंसि४षा५ः। दायिवा४२ुः। शविष्ठ३ मा२३। र्ता४ंया५म्५। न२त्वदन्यो मघवाऽ२३नाऽ२ु। स्ति३ मा२३र्डा४यि४ता५। आइंद्रब्र२। वा। अ२३हो२। मि२तोऽ २३४वा५। वा४ऽ५चो५६हा५यि५॥ ३०॥

ऋषिः—नृमेधपुरुमेधौ॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२४८. त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः।
त्वं वृत्राणि हंस्यप्रतीन्येक इत् पुर्वनुत्तश्चर्षणीधृतिः॥

यशः सामम्—

१. त्व४मिं५द्रा४। य२शाः। असायि। ऋ२जी२षीशवस२ः। पतायिः। त्वं२वृ२त्रा२णी२३हाः२ुसि३या२। प्रतीनाए४२ु। कइत्पूरू४२ु। अनू४२ुहो२ऽ। तश्च२। षाऽ२ुणा३२३४अ५हो५ वा५। धा३२३४ र्त्ती५ः॥ ३१॥

१. अत्रैकमक्षरं घृष्टमतो नैव पठितुं शक्यते किन्तदिति। —सम्पादकः

साध्रम्–

२. त्व५मा२३यिं३द्रा४य५शा४अ४सा५यि५। ऋ२जायिषी२ शाऽ२ु। व३सा२३४५ः। पा३२३४ती५ः। त्वंवृत्राणिहः२स्य२ प्र२तीन्येक२इत्पु२। रू। आना२ुओ३२३४वा५। ताश्चा२ु ओ३२३४वा५। ष४णा४ ऽ५यि५धृ५तीः५। हो४ऽ५यि५। डा॥ ३२॥

वैरूपम्–

३. हा५उ५त्व५मिं५द्रा५। या२शा२ुआ३२३४सी५६। हा५उ५। ऋ२जा२ुयि२ुषी३२३४शा५। वा२स२ऽस्पा३२३४ती५६ः। हा५उ५। त्वं२वृत्रा। णी२हःसिया। हा५उ५। प्र२ती२ुना३२३४ ए५। क२इत्पूऽ२३४रू५६। हा५उ५। अ२नुत्ताऽ२३४श्चा५६। हा५उ५। षाऽ२ुणा३२३४अ५हो५ वा५। धा३२३४ र्त्ती५ः॥ ३३॥

समीचीनः–

४. हा५उ५त्व५मिं५द्रा५। य२शाअसि२। होयि।२। होये२३४। हा५उ५। ३। ऋ२जी२षीशवस२स्पति२ः। होयि।२। होये२३ ४। हा५उ५। ३। त्वंवृत्राणिहः२स्य२प्र२तीन्येक२इत्पु२रू। होयि। २। हौये२३४। हा५उ५३। अनुत्त२श्च२ऋ२ष२णी२ धृति२ः। होयि।२। होये२३४। हा५उ। २। हा५उ५ वा५। सुवर्म्महा३२३४५॥ ३४॥

५. हो५त्व५मिं५द्रा५। य२शाअसि२। होये२३। हो३२३४५। ऋ२जी२षीशवस२स्पति२ः। होये२३। हो३२३४५। त्वंवृत्रा-णिहः२स्य२प्र२ तीन्येक२इत्पु२रू। होये२३। हो३२३४५।

अनुत्त२श्च२ऋ२ष२णी२ धृति२:।होये२३।हो३२३४वा५६।
हा५उ५वा५।सुवर्म्मया२३ ४५:॥ ३५॥

[ इति ] षष्ठप्रपाठकः॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

२४९.इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये॥

यौत्कश्रूचम्—

१. इं४द्र५मि४द्दे५व४ता४। तयायि। इंद्रंप्रयति२यध्वा२३रा२
यि२।आयिंद्रा४२म्२।स२मी२के वनिनो ह२वामा२३हा२
यि२। आयिंद्रा४२म्२। धानस्य२सो२३४वा५। ता३२३४
ये५॥१॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

२५०.इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत॥

१. इ५मा४उ५त्वा५पु५रू५व५सो५गि४र५:ए४ऽ५। गि४रा४५
वार्द्ध२न्तु३या३म२मा२३।पा२व३क२व३र्णा२:।शुचयो-
वी२३पा२। हुं३ हुं३। चा३२३४यि४ता५:। अ२भिस्तोमैर२
नौ४२। हुवायि। हो३वा२। ष२ता। अ२३हो४वा५। हो४ऽ५
यि५।डा॥ २॥

आन्त्राणि त्रीणि—

२. इ५मा५उ५त्वा५पु५रू५वा५सो५हा५उ५। गिरोव२र्द्ध२। तूया२ऽममाऽ२३। इ३हा३हा२होयि। इ२हो३२३४वा५। पा२व२कवर्णा२श्शु२चय२ः। इ३हा३हा२होयि। इ२हो३२३४वा५। वि२प२श्चि। तो। अभिस्तोमैः। इ२हा३हा२होयि। इ२हो३२३४वा५। अ२नूऽ२३। षाऽ२ता३२३४औ५हो५वा५। ऊ३२३४पा५॥ ३॥

३. इ४मा३उ४त्वा५पु५रू५। व३सा२३उ३। गाऽ२३४यि४। रो४व५र्द्ध५न्तु५या४ः। म४मा५। पा२व२कवर्णा२श्शुचयो२ वि२प२श्चि। ता। अ२३हो२। आअ२३हो२। अ२भिस्तोमैर२ नौ४२३। हुवायि हो३॑वा२। ष२त४। अ२३हो४वा५। हो४ऽ५ यि५। डा५॥ ४॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

२ ३ १ २र ३ २३ १ २
२५१. उदु त्ये मधुमत्तमा गिर स्तोमास ईरते।
३ १ २ ३ १ २र ३ २ ३ १ २
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथाइव॥

वासिष्ठानि त्रीणि—

१. उ५दु५त्ये५मा५। धू२मत्तमाऽ२३गा२यि२र२स्तो३२३४मा५सा ईरताये२३। सा२त्रा२जा३२३४यि४ता५ः। धा२ना२सा३२३४आ५। क्षी२तोता४याऽ२३ः। वा२जा२या३२३४न्ता५ः। र३था२३आ४ऽ५यि५वा५६५६॥ ५॥

२.  उ४दु४त्ये४मा४ऽ५धू४म४त्त४मा४ः। गिरस्तोमासआ४रुयिर-
राता४रु यिर। सर२त्रा२जितोधना४रुसाअ। क्षि२तो२
ताया४रुः। वाजयंतोरथा२३ऽउवाऽ२३। ई३२३४वा५॥ ६॥

३.  हं३२३४उ३दु४त्ये३म३धु४म५। त३मो३२३४हा५यि५।
गायिरा४रुस्तोमाऽरु। स३आ२३४५यि। रा३२३४ते५। स२
त्रा२जितोरँ ध२न२साअक्षितो२त२या३२३४५ः। हं३२३४
५। वा४ज४य३तो४र४था५ः। इ३वो३२३४हा५यि५। वा२ज२
यंतो२रथा२इ२। वा। अ२३हो४वा५। हो४ऽ५यि५। डा५॥ ७॥

ऋषिः—देवातिथिः काण्वः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

२५२. यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब॥

१.  य२थागौऽ२३रो४अ४पा५कृ५ता५म्५। तृष्यन्नेतिय२वेराऽ२३
यि३णा२म्२। आ२पि२त्वेनष्प्रपित्वेतूय२मागाऽ२३ही२।
कण्वे४रुषु२सूऽ२३। साऽरुचा३२३४अ५हो५वा५। पी३२३४
बा५॥ ८॥

२.  ओ२वारुओ३२३४वा५। या४था५। गौ२रो२अ२३पाकृतम्।
ओ२३४। हा३हो२यि२। त्तृ२ष्य२न्ने२ति२या२३वायिरिणम्।
ओ २३४। हा३होरुयिरु। आ३२३४पी५। त्वेनष्प्रपित्वेतू-
यामा२ऽगहि३। ओ२३४। हा३हो२यि२। कण्वे४रुषु२सूऽ२३।
साऽरुचा३२३४अ५हो५वा५। पि२बा२३ईऽ२३४५॥ ९॥

ऋषिः—भर्गः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३ २ १ २ ३ २ ३ १ २ ३ १ २
२५३. शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
२ ३ १ २र ३१ २ ३ २३१२ ३ १ २
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥

हारायणानि त्रीणि—

१. शप्गध्यूप्षुप। शर्चायिपता२ुयि२ु। ई३२३४न्द्राप्। विश्वा२-भी२३रूतिभा२ुयि२ुः। भा३२३४गाप्म्प्। न२हि२त्वा२-य२शा२३साम्वसु२ु। वी३२३४दाप्म्प्। अनूऽ२३। शूऽ२ुरा-३२३४अप्होप्वाप्। चरारॅम२सी३२३४प् ॥ १० ॥

२. श४ग्ध्यू४ष्वौ४हो४ऽप्यिप्शप्चीप्प४ता४यि४। आयिंद्रविश्वा भिरूतिभिः। भगान्ना२३ही२। त्वायशसाम्। वसू२३हा२यि२। वायिदा४२ुम्२। अनुशूरचरोवा२३ओऽ२३४वाप्। मा४ऽप् सोप्६हाप्यिप् ॥ ११ ॥

३. श४ग्ध्यू३षु३श४चीप्। प३ता२ुयि२ु। श३ग्ध्यू४षुप्। श२ चायिपते२। आऽ२यि२हि२मा३२३४हाप्ः। आयिंद्रविश्वा२। भि२रूतिभि२ः। आऽ२यि२हि२मा३२३४हाप्ः। भागन्न२हि२ त्वा२य२श२स२म्२। व२सूविद२म्२। आऽ२यि२हि२ मा३२ ३४हाप्ः। अनुशू२ऽराऽ२३। आऽ२यि२हि२मा३२३४ हाप्ः। च२रामाऽ२३सा२३४ऽ३यि३। ओऽ२३४प्यिप्। डाप् ॥ १२ ॥

ऋषिः—रेभः काश्यपः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ २ ३ १ २ ३क २र ३ १ २
२५४. या इन्द्र भुज आभरः स्वर्वां असुरेभ्यः ।
३ २ ३ १ २ ३ २ ३ २ ३ १ २
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥

वाम्राणि त्रीणि—

१. या३होरुयिरु। ई३२३४न्द्रा५। भुरजा२३आभा२ऽरा४रुः। सुवाऽ२३हा२। व्वाँ२अ२सू२३रायिभा२ऽया४रुः। स्तोता२३ हा२। रमिन्मघवन्नस्यावर्द्धाया४रु। य्ययिचा२३हा२यि२। त्वे२वृ२क्त२बऋहाऽ२३यि३षा२३४ऽ३ः। ओंऽ२३४५यि५। डा५॥ १३॥

२. या५ई५द्र५भु५ज५आ५भा५६रा५ःसु२व२व्वाम्२अ२सुरेऽ२रु भा३ २३४या५ः। हारु। अ३हो३२३४हा५। स्तो३ता३र२ मायित्। माघ२व२न्ना। स्यवाऽरुर्द्धा३२३४या५। हारु। अ३ हो३२३४हा५। ये२चत्वाऽ२३ यि३व्रे२३। हारु। अ३हो३२३४ हा५। क्त२बऋहाऽ२३यि३षा२३४ऽ३ः। ओंऽ२३४५यि५ डा५॥ १४॥

३. या४ई५द्र५भु४ज५आ४भ५र५ः। उ५हु४वा४हा५यि५। सुवव्वाँ २असुरे२भ्यः। उ२हुवाऽ२३हा२यि२। स्तो२तारमिन्मघ२व२ न्न२। स्याबं र्द्धाया४रु। उ२हुवाऽ२३हा२यि२। ये२चत्वाऽ२३ यि३व्रे२। उ२ हुवाऽ२३हा२। क्त२बऋहाऽ२३यि३षा२३४ऽ ३ः। ओंऽ२३४५यि५। डा५॥ १५॥

ऋषिः—जमदग्निः॥ देवता—आदित्याः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२५५. प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो।
वरूथ्ये३ वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत॥

वरुणसामानि त्रीणि—

१. प्र५मि५त्रा५य५प्रा५हा५उ। आ४रुर्यम्णायि। सचा४रुहो। थि२यौ४रु। हुवायि। आ२र्त्तावसाउ। वरा४रुहो। थि२यौ४रु-

हुवायि। वरुणे। छादी२यंवचाः। स्तोत्रा४२ुः२हायिरा२जौ४२ु।
हुवा। सू२गायता२३ऽउवाऽ२३। ओ२३४पा५॥ १६॥

२. प्र५मि५त्रा५य५प्रो२हो४वा५। आर्यम्णा२ु। अ३हो२३४यि४।
अ२होवा२। साचथ्य२म्। ऋ२तावासा२ु। अ३हो२३४यि४।
अ२होऽ३ वा२। वारूथ्ये२व२रु२णे२छ२दि२याम्वाचा२ु।
अ३हो२३४यि४। अ२हो३वा२। स्तोत्रः। राजा२ु। अ३हो२३४
यि४। अ२हो३वा२। [1]षू२गायाता। अ३हो२३४यि४। अ२
होईया२३४ऽ३। ओऽ२३४५यि५डा५॥ १७॥

३. प्र२मि५त्रा५य५प्रा५र्य५म्णो४वा५। ओं४वा५। साचथ्य२म्२।
ऋ२तावा२ऽसा४२ुउ२। वाऽ२३रू२। थाऽ२३या२यि२।
वरुणे२छ। दायाऽ२३ः३हा२यि२। वचो३आ२। स्तो२त्रः
राजसु२ गा२यर२त२। स्तोऽ२३त्रा२म्२। राजसु२गौ३। हो२३ऽ
२३४। वा५। या४ऽ५तो५६हा५यि५॥ १८॥

ऋषिः—मेधातिथिः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
२५६. अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम्॥

वषट्कारणिधनम्—

१. अ४भि३त्वापू४र्व्व३पी४त५ये५। अ५भि५त्वा२३पू४र्व्व५पी४
त४या५यि५। इं२द्र२स्तो२मे२भी२३रायवा४२ुः। भि२राया२ऽ
वाऽ२३ः। ओमो३वा२। स२मी२ची२ना२ुस२ऽऋ२भ२व२
स्सा२३मा स्वरा४२ुन्२। स२मास्वा२ऽराऽ२३न्३। ओंमोवा२।

१. अत्र 'षू'इत्यस्य स्थाने 'सू' इति स्यात्। —सम्पादकः

रु२द्रा२गृ२णं२ता२३पूर्व्विया४रुम्२।त२पूर्व्वा२ऽया२ऽ२३म्३[1]

...म्ओ२रु। वा३२३४। औ५हो५वा५ऊ३२३४पा॥ १९॥

ऋषिः—नृमेधपुरुमेधौ॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२ ३ १ २ ३ १ २र ३ १ २
२५७.प्र व इन्द्राय बृहते मरुते ब्रह्मार्चत।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा॥

मारुतम्—

१. प्र४व५इं४द्रा५य५बृ५ह५ते४।प्र५वा४ः।इं२द्रा२या२३येहा२ऽ ते२२३। ओमो३वा२। म२रु२तो२ब्र२ह्मा२३आर्च्चा२ऽ ता२२३। ओमो३वा२। वृ२त्रं२हाना२। ति२वृ२। त्राहा२२३ ओमो३वा२। श२ताक्रतु२ः। वा३२३४ज्रे५। ण३शा२३। हा२३हा२।त४पा४ऽ५र्व्व५णा५।हो४ऽ५यि५डा५॥ २०॥

२५७क. [2]स त्वा हिन्वति धीतिभिः संश्रवसे स त्वा रिणति धीतिभिः विश्रवसे।स त्वा ततक्षुर्धीतिभिः सत्यश्रवसे सं त्वा शिशति धीतिभिः॥

सांश्रवसः—

१. सात्वाहि२न्व२। ति२धायितायिभी२३ः। ताऽरुयिरु। भा३२३४। अ५हो५वा५। सं२स्र२व२से२३सात्वारि२ण२। ति२धायितायिभी२३ः। ताऽरुयिरुभा३२३४औ५हो५वा५। विश्र२व२से२३। सात्वात२त२। क्षु२र्द्धायितायिभी२३ः। तारुयिरुभा३२३४।अ५हो५वा५।स२त्य३ऽ२श्र२व२ से२३। [3]सांत्वाशि२श२। ति२धायिता२ऽयि२भी४रुः। [ ता ] यिभि४रुः।॥ २१॥

---

१. अत्र '३'त्रिसंख्याया अग्रेऽनुदात्तयुतं किमक्षरमिति न ज्ञायते हस्तलेखेऽस्पष्टत्वात्।

२. अयं मन्त्रः सामवेदेऽद्यत्वे नोपलभ्यते, कस्मिंश्चिच्छाखाग्रन्थे स्यादयं मन्त्र इत्यन्वेष्यम्।

३. मूलगानग्रन्थेऽस्मादारभ्यामन्त्रांतं 'बृहदिन्द्राय...' इति मन्त्रस्यारम्भे लिखितम्। —सम्पादकः

ऋषिः—नृमेधपुरुमेधौ ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३ १ २र ३ १२ ३ १ २
२५८.बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
येन ज्योतिर जनयन्नृतावृधो देवं देवाय जागृवि ॥

श्रवसः—

२. बृ२ह२दि२द्रा२या२३गाया२ऽता४२। याता४२। मा२रु२तो२ वृ२त्रा२३हान्ता२ऽमा४२मु्२। तामा४२म्। ये२न२ज्यो२ति२र२ ज२न२य२न्ने२३ता वा२ऽर्द्ध४२ः। वार्द्धा४२ः। दे२व२न्दे२ वा२या२३जाग्र२ऽवी४२। ग्रेवी४२। [१]सांत्वाशि२श२। ति२धा यितायिभी२३ः। ताऽ२यि२। भी३२३४। अ५हो५वा५। श्रवसे३२३४५ ॥ २२ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
२५९.इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा।
१ २ ३ १ २ ३ १ २ ३ १ २र
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ ७ ॥

१. इं२द्राअ२३हो२। क्र२तु२न्ना२३आभा२ऽरा४२। पि२ताऔ२३ हो२। पु२त्रे२भी२३योया२ऽथा४२। शि२क्षाअ२३हो२। णो२- अ२स्मि२न्पु२रु२हू२तयामा२ऽनी४२। जीवाऽ२३ः। ज्योऽ२ता ३२३४अ५हो५ वा५अ२शी२म२ही३२३४५ ॥ २३ ॥

२. ई४द्र४क्र४तू४ऽ५न्न५आ५भ४रा४। पि२तापुत्रेभि२योयथा। शिक्षाणोऽ२३आ२। स्मायिन्पुरु२हू२। तयामा२ऽनी४२। औ४२। हौ४२। हुवायि। औ२३हो३२३४वा५। जी२वाज्योऽ २३ती२ः। अ२ शीमाऽ२३हा२३४ऽ३यि३। ओंऽ२३४५यि५। डा५ ॥ २४ ॥

---

१. अस्मादारभ्यामन्त्रसमाप्तेरंशोऽयं पूर्वमन्त्रस्यास्ति। —सम्पादकः

३. इं५द्र४क्र३तु४न्न५आ५। भ३रा२रओं३२३४वा५। पि५ता५पू-
२३त्रे४भि५ यो४य४था५। हं३२३४५। पि४ता३पु४त्रे३-
भि४य५:। याथा ऽ२३४हा५यि५। शा४यि४क्षा५णो४आ५-
स्मा३यि३न्पु४रु५हू५त५ या५। मानोऽ२३४हा५यि५। जी४
वा५ज्यो४ती५:। अ२शोऽ२३४ वा५। मा४ऽ५हो५६हा५
यि५॥ २५॥

ऋषिः—रेभः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

१ २ ३ १ २ ३ १ २ ३ १ २
२६०. मा न इन्द्र परा वृणग्भवा नः सधमाद्ये।
१ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परावृणक्॥

आंगिरसे द्वे—

१. मा५न५इं५द्रा५। परावा२३र्णा२क्२। भवा नस्सधमा२ऽदी२३
या२यि२। त्वन्नऊती त्वमिन्नआपी२३या२म्२। मा न इंद्र
परावृ२वृणा२३ऽ उवाऽ२३। ऊ२३४पा५॥ २६॥

२. मा३न४इं५द्र५प४रा५। वृ३णा२रक्२र। मा३न४इं५द्रा५। प२
रावाऽ२३र्णा२क्२। भवॉ२न२स्स२ध२मादाऽ२३या२यि२।
त्वन्न ऊती४२र। त्वमिन्ना४२रआपियाम्। मा२नाआऽ२३यिं३
द्रा२। प२रावाऽ२३ र्णा२३४ऽ३क्३। ओऽ२३४५यि५
डा५॥ २७॥

ऋषिः—मेधातिथिः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
२६१. वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः।
३ १ २ ३ १ २ ३ १ २ ३ १ २
पवित्रस्य प्रस्त्रवणेषु वृत्रहन् परि स्तोतार आसते॥

आष्कारणिधनकाण्वम्—

१. व५यं५घा२३त्वा४सु४ता५वं४ता५:। आपो न२वृ२। क्त२बाऽ २३ऋ३हि३षा२३२। वा२३२प२वित्र२स्या। प्र२स्त्र३व२ णायि२। षु२वृत्राऽ२३४हा५न्५। पा२३री२। स्तोतार२:। आसाऽ२३४५ ता५६५इ५ध्या३२३४५षू५॥ २८॥

वैष्टम्भम्—

२. [1]औं४होे५वा४। व५यं४घ५त्वा५सु५ता४वं५तः। [1]औं४हो५-वा४। अहोयि। आपो न वृक्तबर्ह्हिषः। पवायित्रा२३स्या२। प्रस्त्रवणेषु वा२ऽर्त्रा२३हा२न्२। औ२हो२३यि३। औहोयि। परिस्तोता रआसते। परायिस्तो२३ता२ु। र३आ३स२ता। अ२३हो४वा५। हो४ऽ५यि५डा५॥ २९॥

अभिनिधनकाण्वम्—

३. अ५हो४हो४हा५यि५। आ४यि४ही५। वा४या५म्५। घा-३२३४त्वा५। सूर्ता२ुवा३२३४न्ता५:। आ२पो२ुना३२३४ वृ५। क्ता२बर्ह्हिषाः। ऐ२होयि। आ३२३४यि४ही५। पा२वि२ु त्रा३२३४स्या५। प्रा२स्त्रा२ु वा३२३४णे५। षू२वृत्रहान्। ऐ२ होयि। आ३२३४यि४ही५। पा२ रि२ुस्तो३२३४ता५। र३ आ२३सा४ऽ५ता५६५६यि६। आ३२३४ भी५॥ ३०॥

महावैष्टम्भम्—

४. व५यं४घ५त्वो४हा४यि४। सु५ता५वं५तो४वा५। आपोन२वृ२। क्त२बार्ह्हा२ऽयिषा२३:। होवा२३हा२यि२। प२वित्रस्य२प्र२ स्त्रवणे२। षु२वार्त्रा२हाऽ२३न्३। होवा२३हा२यि२। परायि स्तो२ऽताऽ२३। होवा२३हा२। र२आऽ२३। साऽ२ुता३२३४-औ५हो५वा५। दी३२ ३४शा५:॥ ३१॥

---

१. 'औ' इत्यस्य वर्तमानप्रचलितलिप्यां 'ऐ' इति रूपं ज्ञातव्यम्। —सम्पादकः

ऋषिः—भरद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ १२ ३ १ २र ३ १ २ ३ १ २
२६२. यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु।
२ ३ १ २ ३ २ ३ १ २र ३१ २र ३ १ २
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥

श्नौष्टीगवम्—

१. ओ५हा५यि५य४दिं५द्र५ना४। हु५षी५षू५६वा५। ओजो४२ु-नाम्र्णा४२ुम्२। च२कृ२ष्टि। षू। ऐ४२ुही२ऽआयिही४२ु-हा४२ुऊऊवायि। या२ऽ द्वा४२ुपांचा४२ु। क्षि२ती२नाम्। ऐ४२ु-ही२ऽ२आयिही४२ु। हा४२ु ओहुवायिद्यु३म्नमाऽभर२। रा। ऐ४२ुही२ऽआयिही४२ु। हा४२ुऊऊवायि। सा२ऽत्रा४२ु-वायिश्वा४२ु। नि२पौ३ंसि। या। ऐ४२ुही२ऽआयिही४२ु। हा४२ुऊऊवाऽ२ु। या३२३४अ५हो५वा५। ऊ३२३४ पा५ ॥ ३२ ॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३ २ ३ १ २र ३ १ २ ३ २
२६३. सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता।
२ ३क २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥

वृषकम्—

१. स५त्य४मि५त्था४वृ४षा४ऽ५यि५द५सा४यि४। वृषजूतिर्न्नो-विता४२ु। वृषाह्युग्रार्शृण्विषा४२ुयि२। प२रा२वतायि। वृषोऽ २३र्वा२। व२ तायिश्रूऽ२३ता३२३४ऽ३ः। ओंऽ२३४५यि५। डा५ ॥ ३३ ॥

[ इति ] अर्द्धप्रपाठकः ॥

ऋषिः—रेभः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२६४.यच्छक्रासि परावति यदर्वावति वृत्रहन्।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥

घाते द्वौ द्वेगातम्—

१. य५च्छ५क्रा२३सी४प५रा४व४ती५। यादर्व्वा२ व२। ति२ वार्त्रा२ऽहाऽ२उन्२उ। अ३ता२३ः। हौ३हो२३वा२। त्वागीर्भिर्द्युग-दिंद्राके२ऽशिभी४२उः। सुताऽ२३। वाःऽ२उआ३२३४अ५हो५वा५। ए२३। विवा२ँस२ती३२३४५ ॥ १ ॥

२. य४च्छ५क्रा४सी५प५रा५व४ति५य५दो४हा४यि४। र्व्वा२ वा२३तायिर्वॄँत्राहाऽ२३४न्४। अ३ता२३४स्त्वा३गा२ यि२। भायिर्द्युग२दि२। द्राके२ऽशिभी४२उः। सुताऽ२३। वाःऽ२उ आ३२३४अ५हो५वा५। विवा२ँस२ती३२३४५ ॥ २ ॥

ऋषिः—वत्सः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२६५.अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम्।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥

कार्तयशम्—

१. अ५भि४वो५वी५र४मं४ध५सा४ः। म२दे२षू२३गाया४२उ। गिर रामाहा२३। वीचे२उता३२३४सा५म्५। इं४द्र५न्ना५मा४। श्रूत्यंः शा२का२ऽउयि२उ। ना३२३४अ५हो५वा५। व२चो२उया३२३४५। [ था ] ॥ ३ ॥

ऋषिः—भरद्वाजः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२६६.इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥

१. इं४द्र४त्रि४धा४ऽ५तु५श५र४णा४म्४। त्रि२वरूथं॰सु२-वस्तयायि। छर्दिर्य्याऽ२३च्छा२। माघव२ द्भ्य२ः। चामँह्याऽ-२३ञ्चा२। या२वयाऽ३दी२। द्यूमे४२भि२या। औ२३हो४वा५। हो४ऽ५यि५। डा५ ॥ ४ ॥

ऋषिः—नृमेधः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२६७.श्रायन्तइव सूर्यं विश्वेदिन्द्रस्य भक्षत।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥

श्रायन्तीम्—

१. श्रा५यं५त५इ५व५सू५ऽ४रा४या५म्५। विश्वा४२यि२दिंद्रा४२। स्यभा४२क्षाता। वासूनि२जा२तोजनिमा२। नि२योजा२ऽसा४२। प्रतिभा२गन्नदीँ२धि२म२ः। प्राऽ२३ती२। भागान्ना२३दा२। हुं। धि३मा२३ः। ओऽ२३४वा५। हे३२३४५ ॥ ५ ॥

ऋषिः—पुरुहन्मा ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२६८.न सीमदेव आप तदिषं दीर्घायो मर्त्यः।
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥

वामम्—

१. न३सी४म३दे४व५आ५। हा२३हा२३यि३। पाऽ२३४। त४त्प४तो४वा५। इष॰हो४२यि२। दीर्घाहो४२। योमँर्त्ताया४२ः। आयितग्वा२चि२त्२। य२आयिताशो२। यु३या२उ२वा२३।

ऊ२३४पा५ । जता४२ुयि२ । आयिंद्रो४२ुहारी४२ु । यु२य़ो़ऽ२३ ।
जाऽ२ुता३२३४औ५हो५वा५ । ऊ२३ऽ२३४पा५ ॥ ६ ॥

ऋषिः—नृमेधपुरुमेधौ ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२　३　१　　२ ३ २　३ १ २　३ १ २
२६९.आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत।
२ ३　१ २　３　　१ २　　　　　　३　१　२
उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम ॥

वासिष्ठानि त्रीणि—

१.　आ४न५ः । ए४वि४श्वा५ । सु२हाव्या४२ुम्२ । आयिंद्र२ंस२म२ । त्सूभू२ऽषाता२ु । ऊ३२३४पा५ । हा२३हा२यि२ । ब्रह्मा२णि२ सवना२ु । नि३वृ३त्र२हान् । प२रमाऽ२३ज्या२ः । आर्च्या२३ हा२यि२ । ष२मा । औ२३हो४वा५ । हो४ऽ५यि५ । डा५ ॥ ७ ॥

२.　आ५नो५वि५श्वा५षु५हा५हा४व्या५म्५ । इद्र२ंसमत्सुभूषतो । पब्राऽ२३ह्मा२ । णि२सवना । नि२वृत्रहान् । प२रमाऽ२३ज्या२ः । आर्च्या२३हा२यि२ । ष२मा । औ२३हो४वा५ ॥ हो४ऽ५यि५ । डा५ ॥ ८ ॥

वैयश्वम्—

३.　आ५नो५वि५श्वा५सु५हा४व्या५म्५ । इ२न्द्रा२म्२ । स२म२ त्सु२भू२ष२त२ । उ२पाब्रा२ऽह्मा४२ु । णि२स२व२ना२नि२वृ२ त्र२ह२न्२ । प२रामा२ऽज्या४२ुः । ऋ२ची़षाऽ२३मा२३४ऽ३ । ओंऽ२३४५यि५ । डा५ ॥ ९ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१　२र　३ २उ　３　१　२　　　३ २
२७०.तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम्।
३　१　　२र　　３ १　२　　　३ १　२　३　१ २
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते ॥

निधनकामम्—

१. त४वे४दिं४द्रा४ऽ५व५मं५व४सू४। त्वं पुष्य२सि२म२ध्य२मम्। सात्रा२ वा३२३४यि४श्वा५। स्याप२र२मस्य२रा२ज२सि२। नकि२ष्ट्वा३२३४गो५। षूव्रेण्वाऽ२३ता२यि२। होवा२३ होयि। हो। वा२हा२३ऽ उवाऽ२३४५॥ १०॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

२र ३ १२ ३२ ३ २ ३ १२
२७१. क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः।
१ २ ३ १ २ ३ १ २
अलर्षि युध्म खजकृत् पुरन्दर प्र गायत्रा अगासिषुः॥

इन्द्रप्रियाणि त्रीणि—

१. क्वे५य५था५। कु२वे२दसा४रुयि२। औहो४रु। औहोयि। औ२३ हो३२३४वा५। पु२रु२त्रा२चायित्। हि२ते२मना४रुः। औहो४रु। औहोयि। औ२३हो३२३४वा५। अ२ल२र्ॠ२षियू। ध्मा२खजक्रे४रुत्२। औहो४रु। औहोयि। औ२३हो३२३४ वा५। पु२रं२दरा। प्र२गा२यात्रा४रुः। ४रुः। औहो४रु। औहोयि। औ२३हो-३२३४वा५। अ३गा२३। साऽरुयिरुषू३२ ३४अ५हो५वा५। सु२शंऽसाऽ२३४५ः॥ ११॥

२. कु४वा५कु४वा५। याथा। कु२वे२दसायि। ऊवायि। अ२३ हो३२३४५। पु२रु२त्रा२चायित्। हि२ते२मनाः। ऊवायि। अ२३हो३२३४५। अ२ल२र्ॠ२षियू। ध्मा२खजक्रेत्। ऊवायि। अ२३हो३२३४५। पु२रं२दरा। प्र२गा२यात्राः। ऊवायि। अ२३ हो३२३४५। अ३गा२३। साऽरुयिरुषू३२३४अ५हो५वा५। सु२शा२३ऽ३साऽ२३४५ः॥ १२॥

३. क्वे२य२थ२कू२३वायिदाऽ२३४सी५ । पुरुत्रा२चिरत्२ । हिर
तायिमाऽ२३ना२ः । आलऋषि२ । युऽध्माखजक्रे२३त्३ । हा२
उ२वा२ । पुर२ंदाऽ२३रा२ । प्र२गा२यात्रा४२ुः । अ२गाऽ२३ ।
साऽ२ुयि२ुषू३२३४अ५हो५वा५ । प्सू३२३४५ ॥ १३ ॥

ऋषिः—कलिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२७२. वयमेनमिदा ह्योऽ पीपेमेह वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥

१. व५य५मे५ना५म्५ । आऽ२ुयि२ुदा३२३४अ५हो५वा५ । ही३२
३४या५ः । अपीपे२मे२हवज्रिणम् । तास्मा४२ुऊवा४२ु । द्यस-
वनायि । सूतम्भारा४२ु । आ२नूनाऽ२३म्भू२ । षातश्रु२ते२ ।
इडाऽ२३ भा२३४ऽ३ । ओंऽ२३४५यि५डा५ ॥ १४ ॥

पौरुहन्मनम्—

२. व५य५मे५ना५म्५ । इदा४२ुहायाः । अ२पौहोयि । पे२मौहोयि ।
इ३ । हा२वज्रिणाम् । त२स्म्मा२उवा । द्या२सवनायि । सू२
तम्भारा । आ२नौहो । न२म्भौहो । षा२तश्रुता२३ऽउर्वऽ२३ ।
ऊ२३४पा५ ॥ १५ ॥

वसिष्ठसामासितम्—

३. व४य३मे४ना५ । मि५दा५ । हि३या२ुओ३२३४वा५ । इ४या४
हा५यि५ । हु२वेहो४२ुयि२अपीपेमेहावज्रिणा४२ुम्२ । तस्माउ-
वद्यसवनायि । सूतम्भारा४२ु । ई३या२ । आ२नूनाऽ२३४म्भू५ ।
ष२ताश्रूऽ२३४५ता५६५६यि६ । श्र२वा२३साऽ२३४५-
यि५ ॥ १६ ॥

ऋषिः—पुरुहन्मा ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२७३. यो राजा चर्षणीनां याता रथेभिरध्रिगुः।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥

१. यो५रा५जा२३च४ऋ४ष५णा४यि४ना५म्५। याता२रथे२। भि२ राध्रा२ऽयिगू४२उः। ध्रायिगू४२उः। वायिश्वासा२३म्३। तरुता२३।२।पार्त्ता२उना३२३४ना५म्५।ज्यायिष्ठं२यो२वा। त्राहा२उगा३२३४र्णो५ यि५। त्र४र्हं४ऽ५गृ५णा५यि५। हो४ऽ५ यि५। डा५॥ १७॥

प्राकर्षणम्—

२. यो३रा३जा४च५। ष३णा२३ऽ२३४यि४ना५म्५। याता-रथेभि२रध्रा ऽ२३यि३गू२ः। विश्वासान्तरुतापृतनाऽ२३ना२म्। ज्याऽ२३यि३ष्ठा२म्२। योवृत्र२होवा२३ओऽ२३४वा५। गा४ऽ५र्णो५६हा५यि५॥ १८॥

ऋषिः—भर्गः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२७४. यत इन्द्र भयामहे ततो नो अभयं कृधि।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥

अभयंकरम्—

१. य५त५आ२३यिं३द्रा४भ५या४म४हा५यि५। ततोनोअभ२-यङ्काऽ२३र्द्धी२। मघवञ्छग्धि तव तन्न२ऊताऽ२३या२यि२। वि२द्वायिषोऽ२३वी२। मा र्ध्रोज२हि२। इडाऽ२३भा२३४ऽ३। ओऽ२३४५यि५। डा५॥ १९॥

ऋषिः—इरिम्बिठिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ १ २र ३ १ २
२७५.वास्तोष्पते ध्रुवा स्थूणाꣳसत्रं सोम्यानाम्।
३ २ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा॥

कवषे द्वे—

१. वा५स्तो५ष्प५ता५यि५। ध्रु२वा। स्थूणा२ओऽ२३४वा५। अꣳसत्र२ꣳ२सो२म्यानाॅ२ॅम्२। द्र२प्सष्पुराम्भेत्ताशश्वताऽ२३ यि३ना२म्२।आ३२३४यिं४द्रा५ः।मुनीॅ२ॅ।ना२३ऽउवाऽ२३। सा३२३४खा५॥२०॥

२. वा३स्तो४ष्प५ते५ध्रु५वा५।स्थू३णा२३।आऽ२३४।स४त्र५ꣳ ५सो५।म्या४ना५म्५।द्र२प्सष्पुराम्भेत्ताश२श्वताऽ२३-यि३ ना२म्२।आऽ२३यिं३द्रा२ः।मुनीॅ२ॅ।नोऽ२३४वा५।सा३२३४ खा५॥२१॥

ऋषिः—जमदग्निः॥ देवता—सूर्यः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२ ३ १ २ ३ १ २ ३ १ २
२७६.बण्महाँ असि सूर्य बडादित्य महाँ असि।
३१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि॥

सूर्यसामम्—

१. ब५णम५हाꣳ२३अ४सि४सू५र्या५। बाडादि२त्य२। म२हाꣳ आ२ऽसाऽ२३४यि४।म४ह३स्ते४स४तो३म४हि४मा३ प४नि५। ष्टा२३ मा२। म२ह्नादाऽ२३यि३वा२३। म२होऽ२३४ वा५। आ४ऽ५ सो५६हा५यि५॥२२॥

ऋषिः—देवातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
२७७.अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ॥

आश्वे द्वे—

१. अ४श्वी५अ४श्वी५ । र२थी२सू२३रूपा२ऽई४२उत् । २ । गोमा-ड्य२दि२ । द्राते२ऽसाखा४२उ । श्वात्रा४२उभाजा४२उ । वयसास-च२तेसाऽ२३दा । चंद्रायिर्या२३ती२३ । साऽ२३भा४ऽ३म्३ । ऊ२३४५पो५६हा५यि५ ॥ २३ ॥

२. अ५श्वी५र५थी५सु५रू५पा५६ई५त्५ । गोमाड्यदिंद्रते सखाउवाऽ२३होवाऽ२३हा४२उईया । श्वा२त्रा भाजा वयसा सचते सदाउवाऽ२३होवाऽ२३हा४२उइया । चंद्रायिर्या२ऽती४२उ । साभामु२प२ । इडाऽ२३भा२३४ऽ३ । ओऽ२३४५यि५ । डा५ ॥ २४ ॥

ऋषिः—पुरुहन्मा ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २र ३ २ ३ १ २र ३ २
२७८.यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
१ २ ३२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥

वैरूपम्—

१. य२द्यावाऽ२३इं४द्र४ते५श५ता५म् । श२तंभूमीरुतस्यू४२उः । न त्वावज्रिन्त्सहस्र२ः[१]सूर्याअनू४२उ । ना जा४२उतामाऽ२३ष्ट२रोऽ-२३४वा५ । दा४ऽ५सो५६हा५यि५ ॥ २५ ॥

१. मूलगानग्रन्थेऽत्र 'श्र२ः' इति लिखितम् । तन्न शुद्धम् । —सम्पादकः

ऋषिः—देवातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ २उ ३ २ ३क २र ३ २ ३ १ २
२७९. यदिन्द्र प्रागपागु दग्न्यग्वा हूयसे नृभिः ।
१ २ ३ १ २र ३ २ ३१ २ ३ १ २
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥

१. य४दिं५द्र५प्रा४ग४पा४क्४। उदाक्। न्यग्वाहूय२सेनृभि४२ुयि२ः। सिमापुरूनृषूतोअ। सि२यानवा४२ुयि२। आसी४२ुप्राशा४२ु। ध२तोवीर२३ ओऽ२३४ वा ५। र्व्वा४ऽ५ शो५६हा५ यि५ ॥ २६ ॥

२. य५दिं५द्र५प्रा५ग५पा५गू५दा५६गे५। नायग्वा२हू२। य२सायिनृभी२३ः। हा २ु। अ३हो३२३४हा५। सिमाँ२पु२रूनृषू२तो२अ। सि२यानवेऽ२३। हा२ु। अ३हो३२३४हा५। असायि-प्राशा२३। हा२ु। अ३हो३२३४हा५। धाऽ२ुतू३२३४ अ५हो५वा५। र्व्वा३२३४शे५ ॥ २७ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २र ३ १ २र
२८०. कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
३ १ २र ३ १ २ ३ २ ३ १ २र
श्रद्धा हि ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥

कौसुदे द्वे—

१. क५स्त५मिं५द्रा५। त्व४२ुवासा४२ुउ२। आमर्त्योदधऋषतायि। श्र२द्धा२हायिते४२ु। माघ२व२न्पा। रियायिदा२ऽयिवीऽ२ु। वा३जी२वाजा४२ुम्२। सि२षाऽ२३। साऽ२ुता३२३४अ५हो५वा५। ऊ२३ऽ२३४पा५ ॥ २८ ॥

२. क३स्त३मिं४द्र५त्वा५। व३सा२३उ३। आऽ२३४। म४र्त्यो५द५ध५। ष४ता५यि५। श्र२द्धा२हायिते४२ु। माघ२व२न्पा। रियायि। दायिवी२ुओ३२३४वा५। ऊ३२३४पा५। वा३जी२

वाजा४२ुम्२। सिर्षा२३। सा२ुता३२३४अ५हो५वा५।
ऊ३२३४पा५॥ २९॥

ऋषिः—भरद्वाजः॥ देवता—इन्द्राग्नी॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

१ २ ३ २ ३ १ २र ३ १ २
२८१.इन्द्राग्नी अपादियं पूर्वागात् पद्वतीभ्यः।
३ १ २र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
हित्वा शिरो जिह्वया रारपच्चरत् त्रिंशत् पदा न्यक्रमीत्॥

वाचस्सामम्—

१. इं५द्रा५ग्नी५अ५पा५दि५या५६मे५। पूर्व्वागा४२ुत्२। पद्वतायि-
भा२ऽया४२ुः। हित्वाशिरोजि२ह्वयारा। रापच्चारा४२ुत्२।
त्रिं२शत्पदा। नि२याऽ२३। क्राऽ२ुमा३२३४अ५हो५वा५।
ऊ२३ऽ२३४ पा५॥ ३०॥

ऋषिः—बालखिल्याः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
२८२.इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः॥

त्राम द्वे—

१. इं४द्र५ने४दी५य५ए४दि५। हा४यि४। मि५त४मे५। धा५। भिर
रूतिभिः। आशंतऽ२३मा२। शंतमाभिर२भिष्टिभिः।
आस्वाऽ२३ पे२। स्वाअ२३हो४ऽ३। पि२भिरॅरो३२३४५यि५।
डा५॥ ३१॥

२. इं४द्र५ने४दी५य५ए४दि५। हा४यि४मि५त४मे५। धा५। भि५
रू५ति४भा४यि४ः। आशन्तमशंतमा४२ुभायिः। आँभिष्टिभिः।
आस्वा४२ुपायिस्वाऽ२३। हा४ऽ३। पि२भि२रो३२३४५यि५।
डा५॥ ३२॥

ऋषिः—नृमेधः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३ २ ३ १ २ ३ १२ ३ २३ १ २
२८३.इत ऊती वो अजरं प्रहेतारमप्रहितम्।
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्रियावृधम्॥

प्रहितौ द्वौ—

१. इ५त५ऊ५ती५। वो२३ओजा२३रा२म्२। अँ३हो२३वा२। प्र२हे२ता२र२मप्राही२३ता२म्२।अ३ँहो२३वा२।आ२शु२-ञ्जे२ता२रा२३ॱ३हायिता२३रा२म्२। अ३ँहो२३वा२। र२थायितममतूर्त्ताऽ२३४न्तू५।ग्रि३या२३।वाऽ२र्व्द्धा३२३४ अ५हो५वा५।स्तु२षे२ऽऽ॥ ३३॥

२. इ५त५ऊ५ती५वो५अ५जा५६रा५म्५। प्र२हे२तारमप्रहित-मुहुवाऽ२३होयि।आ२शुञ्जेतार२ॱ।हायितारमुहुवाऽ२३हो। र२थी२।तमाऽ२म्२।अ३तू२र्त्ता३२३४न्तू५ग्रिया२३।वाऽ२र्व्द्धा३२३४अ५हो५ वा५।स्तौ२३षा३२३४५यि५॥ ३४॥

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

१ २र ३ १ २ ३ २उ ३ १ २र
२८४.मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन्।
३ १ २ ३ १ २ ३ १ २ ३२ ३ १ २र
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि॥

आत्रे द्वे—

१. मो५षु५त्वा५वा५। घाताऽ२३४५ः। चा३२३४ना५। आ२रे अस्मन्निरीरॅ२र२म२न्२।आरा२ऽत्ता द्वा४२।साधेमादा४२म्२। नाआ ग२हि२।आयिहॅवासा४२न्२।ऊपश्रु२धि२।इडाऽ२३ भा२३४ऽ३।ओऽ२३४५यि५।डा५॥ ३५॥

२. मो५षु५त्वा५वा५घ५त५श्च५ना५६ए५। आरा अस्मन्निरी रमा४२उन्२। हा४२ऊऊवा४२उ। यि२। ऊऽऽ। आ२रात्ताद्वास धमादा४२उम्२। हा४२ऊ ऊवा४२उयि२। ऊऽ२ न२आ२उगा३२ ३४ही५। आयिह। वासौ२वा२उओ३२३४वा५। उ२ पश्रूऽ२३ धा२३४ऽ३ यि३। ओऽ२३४५यि५। डा५॥ ३६॥

[ इति ] सप्तमः प्रपाठकः॥

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२८५. सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे।
पचता पक्तीरवसे कृणुध्वमित् पृणन्नित् पृणते मयः॥

गौरीवीते द्वे—

१. सु५नो५त५सो५म५पा५व्ना५६ए५। सोममिंद्राऽ२३। होवा२३ हा२। य२वज्राऽ२३यि३णा२यि२। पचता२पक्तायिरवसे२ कृ२। णू। ध्वा२ऽमीऽ२३ध्वा२यि२। पृ२। णात्। आयित्प्रे२३ हा२। ण२तायिमाऽ२३या२३४ऽ३ः। ओंऽ२३[ ४ ]५। डा५॥ १॥

२. सु४नो३त४सो५म५पा५। आ३व्ना२उओ३२३४वा५। इ४या४ हा५यि५। सोममिंद्रा४२उ। हुवे४२उहुवे४२उहो। यावेज्रिणा४२उ यि२। पचतापक्तायिरवसे२कृ२। णू। ध्वा२ऽमीऽ२३ध्वा२ यि२। पृ२। णान्। आयित्प्रे२३हा२। ण२तायिमाऽ२३ याऽ२३४ऽ३ः। ओं२३४५यि५। डा५॥ २॥

ऋषिः—भरद्वाजः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

२८६. यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम्।
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे॥

१. य३स्स४त्रा४हा३वि३च४ऋ४ष५णी५: । इं५द्र५ता२३ऽ३हू४ म५हे४व४या५म्५ । इंद्रंतंऽहूम२हेवाऽ२३या२म्२ । सहस्रमन्यो तुविनृम्ण२सत्पाऽ२३ता२यि२ । भ२वासाऽ२३ मा२ । त्सूनोवृ२ धे२ । इडाऽ२३भा२३४ऽ३ । ओऽ२३४५यि५ । डा५ ॥ ३ ॥

ऋषिः—पुरुच्छेपः ॥ देवता—अश्विनौ ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२८७. शचीभिर्नः शचीवसू दिवानक्तं दिशस्यतम् ।
मा वां रातिरुप दसत्कदा च नास्मद्रातिः कदा च न ॥

साम—

१. श४ची४भि४र्न्ना४ऽ५: श५ची५व४सू४ । दिवानक्तंन्दि२शस्य- ताम् । मावा४रुम्२ । रा२तिरुपदसत्क२दाचना । आस्मा४रुत्२ । रातिष्क२दोऽ२३४वा५ । चा४ऽ५नो५६हा५यि५ ॥ ४ ॥

ऋषिः—वामदेवः ॥ देवता—वरुणः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२८८. यदा कदा च मीढुषे स्तोता जरेत मर्त्यः ।
आदिद् वन्देत वरुणं विपा गिरा धर्तारं विव्रतानाम् ॥

पञ्चाणि त्रीणि—

१. य५दा५क५दा५ । चाऽरुमा३२३४औ५ होवा५ । ढू३२३४षे५ । स्तो२ताजरे२त२मर्त्ति२या२३: । आदिद्वन्दे२ । तावँरुणाऽ २३४म्४ । वि३पा२३४गि३रा२ । धार्त्ता२राम्वीऽ२३ । व्राऽरुता ३२३४औ५ हो५वा५ । ना३२३४५म्५ ॥ ५ ॥

२. य५दा५क५दा५च५मा५हा५उ५ । ढूषा४रुयि२स्तोता४रु । ज२ रा२इ२ । त२म२र्त्तियः । आदिद्वन्दारु । अ३होर्३हा२३ । हा२३ यि३ । तावाऽरुरू३२३४णा५म्५ । वि२पा२गिरा । धर्त्तारंव्यारु ।

अ३होइँहा२३ । हा२यि२ । व्राताना२म्२ । इडा२२३भा२३४२३
ओ२२३४५यि५ । डा५ ॥ ६ ॥

३. य४दा३२४क५ । दा३२४च४मी५ । ढु३षा२३यि३ । स्तो४ता५ ।
ज२ रा२यि२ । त२मार्त्तीया२३ः । आदायिद्वंदा२३यि३ । तावा२
रू३२३४णा५म् । वि५पा५ । गि३रौ२वा२ओं३२३४वा५ ।
ध५र्त्ता५ । रं३व्यौ२वा२ओं३२३४वा५ । व्र४ता४२५ना५म्५ ।
हो४२५यि५ डा५ ॥ ७ ॥

ऋषिः—मेध्यातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२८९. पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे ।
यः सम्मिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ॥

सोभरे द्वे—

१. पा४हि५गा५आ४ । ध२सोमा२२३दा२यि२ । आयिंद्राय२मे२ ।
धि२ याता२२३यि३था२यि२ । यस्सम्मिश्लो२हरियो२र्यः ।
हायिरैण्या-या४२ । आयिद्रोवा२३ज्री२३ । हि२रो२२३४वा५ ।
ण्या४२५यो-५६हा५ यि५ ॥ ८ ॥

२. पा५हो४पा४ही५ । गा२अं२ध२सोमा२२३दा२यि२ । आयिंद्रा
य२मे२ । धि२याता२२३यि३था२यि२ । यस्सम्मिश्लो२हरि
योर्यः । हायिरैण्याया४२ः । आयिद्रोवा२३ज्री२३ । हि२रो२२३४
वा५ । ण्या४२५यो५६हा५यि५ ॥ ९ ॥

ऋषिः—भर्गः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९०. उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥

वैयश्वम्—

१. उ५भ५य५ऽ५श्रृ५ण५व५च्चना५६ए५। आयिंद्रोऽ२अ२र्वांगि-
दंवचाऽ २३ः। होवा२३हा२यि२। स२त्रा̱चिया̱२म२घवा̱ऽ२न्̱२।
सो। मापा२३हा२यि२। ता३२३४या५यि५। धि२या̱शविष्ठ
आऽ२३होयि। ग२मात्। अऽ२३हो४वा५। हो४ऽ५यि५
डा५॥ १०॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

३२ ३ १ २ ३ १ २ ३ १ २
२९१. महे च न त्वाद्रिवः परा शुल्काय दीयसे।
२ ३१ २ ३ १ २र ३ २ ३ १ २
न सहस्राय नायुताय वज्रिवो न शताय शतामघ॥

सुस्त्रा इतीये द्वे—

१. म५हे̱५च५नो४वा५। त्वा२अ२द्रा३२३४यि४वा५ः। प२रा̱२
शु२ल्का̱२। या२३दायासा२३यि३। न४स५। ह३स्रा२३।
याना̱यु२ ता̱२। य२वाज्रायिवो२३। न४श५। ता̱३या२३।
शाऽ२३ता४ऽ३। मा२३४५घो५६हा५यि५॥ ११॥

२. म५हे̱५चा२३न४त्वा̱५अ४द्रि४वा५ः। पारा̱शु२ल्का̱२। य२दा
या२ऽसा४२यि२। नसहस्रा४२। यना̱यु̱ता̱यावॆज्रिवा४२ः।
न२शाताऽ२३या२। श२ताऽ२३। माऽ२घा३२३४औ̱५हो̱५
वा५। म२हो̱विशे२ऽऽ॥ १२॥

ऋषिः—मेधातिथिर्मेध्यातिथिश्च॥ देवता—इन्द्रः॥ छन्दः—बृहती॥
स्वरः—मध्यमः॥

१ २ ३ २ ३२उ ३ १ २
२९२. वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः।
३ १ २ ३ १ २ ३ २ ३ १ २
माता च मे छदयथः समा वसो वसुत्वनाय राधसे॥

इन्द्राण्याः साम—

१. व४स्या५ऽऽ५इं५द्रा५सि५मे५ । हा४उ४पि४तू५ः । उ३ता२ुभ्रा३२ ३४तू५ः । अ२भूञ्जातौ२ । वा२ुओ३२३४वा५मा२तोचामौ२ । वा२ुओ३२३४वा५ । छ२द२य२थः२ । सा२३मावासौ२ । वा२ुओ३२३४वा५ । व२सूत्वानौ२ । वा२ुओ३२३४वा५ । य२रोऽ-२३४वा५ । धा४ऽ५सो५६हा५यि५ ॥ १३ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९३. इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥

सौभवम्—

१. इ३मा२३४यि४ । इ४म४इ४ । द्रा५य५सु५न्वा५६यि६ । रा५ यि५ । सोमासोदध्याशिराः । ताऽऽ२आमदायवज्रहस्त-पीतायायि । हराऽ२३ हो । भ्याऽऽयाऽ२३हो । हि२योऽ२३ । काऽ२ुआ३२३४ अ५हो५वा५ । ऊ३२ ३४पा५ ॥ १४ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९४. इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥

गार्त्समदम्—

१. इ४म४इं४द्रा४ऽ५म५दा५य४ता४यि४ । सोमाश्चिकित्र-उक्थिनाः । मा२ऽधो४रुष्पापा४२ु । नउपनोगिराश्शा२ऽर्णू४२ु । रा२स्वस्तोऽ२३त्रा२ । य२गिर्व्वाऽ२३णा२३४ऽ३ः । ओऽ२३ ४५यि५ । डा५ ॥ १५ ॥

ऋषिः—मेधातिथिमेध्यातिथी; विश्वामित्र इत्येके ॥ देवता—इन्द्रः ॥
छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९५.आ त्वा३ऽ द्य सबर्दुघां हुवे गायत्रवेपसम्।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरङ्कृतम्॥

वाच्यस्साम—

१. आ५त्व५द्या५सा५६ब५दर्दु५घा५म्५। हु२वायिगा२र्य२त्रवे२ प२स२म्२। आयिंद्राऽन्धे२३नू२म्२। सु२दुघा२म्२। आ। निँयाऽ२मा३२३४यि४षा५म्५। उ२रुधाऽ२३रा२म्२। अ२ रङ्काऽ२३र्त्ता२३४ऽ३म्३। ओंऽ२३४५यि५। डा५॥ १६॥

ऋषिः—नोधाः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९६.न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः।
यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते॥

बार्हदुक्थम्—

१. न४त्वा५बृ५ह४। तो४ऽ५द्र५या४ः। वरन्तइन्द्र२वीडाऽ२३ वा२ः। याच्छिक्षासी४२। स्तूवँतायिमा४२। व२तेवसू। नकिष्टाऽ२३दा२। मि२नाताऽ२३यि३ता२३४ऽ३यि३। ओऽ२३ ४५यि५। डा५॥ १७॥

ऋषिः—मेधातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९७.क ईं वेद सुते सचा पिबन्तं कद्वयो दधे।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः॥

वाशम्—

१. क५ई५म्वे५दा५। सु२तायिसा२ऽचा४२। पिबंतंकद्वायो२ऽ

दाधा४रुयि२ । अ२यंयःपुरोविभिनत्ताओ२ऽजासा४रु । मं२
दानाऽ२३श्शी२३ । प्राऽरुया३२३४अ५हो५वा५ । धा३२३४
सा५ः ॥ १८ ॥

ऋषिः—वामदेवः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९८. यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
अस्माकमंशुं मघवन् पुरुस्पृहं वसव्ये अधि बर्हय ॥

तौरश्रवसम्—

१. य२दिंद्राऽ२३शा४सो४अ५व्र५ता५म्५ । च्या२व२या२स२ ।
दा२३ सास्पारौ२ । वा२३२ । अ२स्माकामौ२ । वा२३२ ।
शुम्मघ२व२न्२ । पु२रुस्प्रेहौ२ । वा२३२ । व२साव्यायौ२ ।
वा२३ऽ२३ । धि२वौँऽ२३४बा५ । हा४ऽ५यो५६हा५ यि५ ॥ १९ ॥

ऋषिः—वामदेवः ॥ देवता—बहवः-( पर्जन्यब्रह्मणस्पत्यदितयो विश्वेदेवाः )॥
छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

२९९. त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥

त्वाष्ट्री साम—

१. त्व३ष्टा२३४ । नो४दै४वि५य५म्५ । व४चा५ः । प२र्जन्यो
ब्रह्म२णस्पाऽ२३ती२ः । पु२त्रैर्भ्रातृभिरदितिर्नु२पातूऽ२३ना२ः ।
दु२ष्टाराऽ२३त्रा२ । म२णम्वाऽ२३चा२३४ऽ३ः । ओऽ२३४५-
यि५डा५ ॥ २० ॥

ऋषिः—बालखिल्याः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३००.कदा च न स्तरीरसि नेन्द्र सश्चसि दाशुषे।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥

अदिदसाम—

१. क५दा५च५ना५स्ता५६री५र५सा५ यि५। नेरन्द्रा२सा३२३४ श्चा५। सा२यि२दा२शू३२३४षा५यि५। उ३पो४पे३न्नु३ म४घ५व५न्भू३य४इ५त्५। हाऽ२यि२नू३२३४ता५यि५। दा२ नं२दा३२३४यि४ वा५। स्य२पोऽ२३४वा५। च्या४ऽ५तो५६ हा५यि५ ॥ २१ ॥

ऋषिः—मेध्यातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३०१.युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः।
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥

अजीगर्त्तम्—

१. आयिही४२। आयिहि२हायि। युंक्ष्वा२हि२वा२३र्त्रा४ऽ३ हं२त३म५। हारीइं२द्र२। प२रावा२ऽताऽ२३४ः। अ३र्वा२३४ ची३ना२ः। माघ२व२न्२त्सो। मपायिता२ऽयाऽ२३४यि४। उ३ग्रा२३४ऽऋ३ष्वा२३यि३। भि२रोऽ२३४वा५। गा४ऽ५हो- ५६हा५यि५ ॥ २२ ॥

ऋषिः—नृमेधः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३०२.त्वामिदा ह्यो नरोऽ पीप्यन् वज्रिन् भूर्णयः।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥

माधुछन्दसम्—

१. त्वा३मिऽदा५। होरुयिरु। हि३यो४न४रा५६ए५। अ५पायिष्य२ न्वा। त्रायिन्भूरुर्णा३२३४या५ः। सइंद्र२स्तोमवा२ह२स२ः। इ२हाश्रूधारु। अ३हो२३४वा३हा३यि२। उ२परस्वासारु। अ३ होर३४वा३हा२। र२मागाऽ२३हा२३४ऽ३ यि३। ओऽ२३४५ यि५। डा५॥ २३॥

ऋषिः—वसिष्ठः॥ देवता—उषाः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३०३. प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी॥

अषमः—

१. प्र२तायि। इ३हा२। आयि। इ३हा२। उ२व२द२। शी२३ आयती२। आयती२। उ२च्छा। इ३हा२। आ। इ३हा२। ती२दु२। ही२३र्तादिवा४२ुः। आदिवा४२ुः। अ२पो। इ३हा२। ओ। इ३हा२। माहीवृ२णु२ते२च२। क्षु२षातमा४२ुः। आतमा४२ुः। ज्यो२तायि। इ३हा२। आयि। इ३हा२। कृ२ णो२। ती२३सूनेरी४२ु। ओनरीऽ२३४ऽ३। ओऽ२३४५यि५। डा५॥ २४॥

ऋषिः—वसिष्ठः॥ देवता—अश्विनौ॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३०४. इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना।
अयं वामह्वेऽ वसे शचीवसू विशंविशं हि गच्छथः॥

अश्विसाम—

१. इ२मा२उ२वा२न्दि२वि२ष्ट२या३२३४ऐ५ही५। उ२स्त्रा२ह२वं२ ते२अ२श्वि२ना३२३४ऐ५ही५। अ२यं२वा२म२ह्वे२व२से२श२ची२व२ सू३२३४ऐ५ही५। वि२श२म्वि२शः२ःहि२ग२च्छ२था३२३४ऐ५ही५। हो४ऽ५यि५ डा५॥ २५॥

ऋषिः—पौर आत्रेयः॥ देवता—अश्विनौ॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३०५. कुष्ठः को वामश्विना तपानो देवा मर्त्यः।
घ्नता वामश्नया क्षपमाणोंऽ शुनेत्थमु आद्वन्यथा॥

संयोजनम्—

१. कु४ष्ठ५ष्को४वा५म५श्वि५ना५आ४। तापानो२दे२। वामर्त्ता या२३ः। होवा२३हा२३४यि४। घ्न३ता२३४वा३मा२ऽ। [1]श्नाया२३। होवा२३हा२३४यि४। क्ष३पा२३४मा३णा२ः। आ२ःशूना२३। होवा२३हा२३४यि४। इ३त्था२३४मु३वा२३त्३। उवाऽ२उन्२उ। य३था२३४अ५हो५वा५। ऊ३२३४पा५॥ २६॥

ऋषिः—प्रस्कण्वः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३०६. अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे॥

आस्विसाम—

१. अ३या२३४म्४। अ४यं४वा५म्म४धु५म५त्ता५६मा५ः। सु२तस्सोमो२दिविष्टि२षु२। ओ२हा२। ओ३हा२३४। ओ३हा२। तामश्विनापिबतंतिरोअह्नि२य२म्२। ओ३हा२। ओ३हा२३४।

१. मूलगानग्रन्थेऽत्र 'स्नाया...' इति पाठः। —सम्पादकः

ओ३हा२ । धत्ताः२रा२ऽत्ना४२ु । ओ३ँहा२ओ३ँहा२३४ । ओ३
हा२ । नि२दाऽ२३ । शूऽ२ुषा३२३४औ५हो५वा५ । ऊ३२३४
पा५ ॥ २७ ॥

ऋषिः—मेधातिथिमेध्यातिथी ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३०७. आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥

सोमसाम—

१. आ५त्वा५सो५मा५ । स्य२ । गल्दाऽ२ुया३२३४औ५हो५वा५ ।
सदा२ँयाचन्न२हञ्जियाऽ२३ । भूर्णा२ुओ३२३४वा५ । मृ२गन्न-
सवने२षु२चु२क्रु२ध२म्२ । क२ईशाऽ२३ना२म्२ । नायाचि२-
ष२त्२ । इडाऽ२३भा२३४ऽ३ । ओऽ२३४५यि५डा५ ॥ २८ ॥

ऋषिः—देवातिथिः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३०८. अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥

अजमायवम्—

१. अ४ध्व४र्यो४द्रा४ऽ५व५या५तु४वा४म्४ । सोममिंद्रा४२ुः । पि२
पासा२ऽती४२ु । उपो२नू२ । २ नंयूयु२जे२वृ२ । षाणा२ऽ
हारी४२ु । आ२चाजाऽ२३गा२ु । म३वृ३त्र२हा । अ२३हो४वा५ ।
हो४ऽ५यि५ ॥ डा५ ॥ २९ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

३०९. अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन् बभूविथ भरेभरे च हव्यः ॥

प्रैषयमेधः—

१. अ५भी५ष५त५स्त५दा५हा५उ५ । भरा । इंद्रज्यायष्क२नीयाऽ २३सा२ः । पु२रू२वसु२ऋहिमघवन्ब२भूवाऽ२३यि३था२ । भरायिभाऽ२३रे२ । च२हव्य२ः । इडाऽ२३भा२३४ऽ३ । ओऽ२३४५यि५डा५ ॥ ३० ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ १ २ ३ २ ३ १ २ ३१ २र
३१०.यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
३ २३ १ २ ३ १ २ ३ १ २
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥

वैरूपे द्वे—

१. य२दिंद्राऽ२३या४व४त५स्तु५वा५म्५ । ए२तावदहमीशीया । स्तोताराऽ२३मी२त्२ । दाधिषे२ । र२दावा२ऽसा४२उ२ । न२पापाऽ२३४त्वा५ । यारौ२वा२ओ३२३४वा५ । सा४ऽ५यि५षो५६हा५ यि५ ॥ ३१ ॥

शाम—

२. य५दिं५द्र३या२व३त४स्तु५वा५म्५ । आयिता२३ । वादा२३हा४मी५ । शीया२३४२उ२ । स्तोता२रामीऽ२३त्३ । द४धि४षे५र५दा५ । वासा२उ४२उ२ । ना पा२पात्वाऽ२३ । यारौ२वा२ओं३२३४वा५ । सा४ऽ ५यि५षो५६हा५यि५ ॥ ३२ ॥

ऋषिः—नृमेधः ॥ देवता—इन्द्रः ॥ छन्दः—बृहती ॥ स्वरः—मध्यमः ॥

१ २ ३ १ २ ३ १ २र ३ १ २
३११.त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ ९ ॥

वैश्वदेवम्—

१. त्व४मिं५द्रो४हा४यि४। प्र५तू५र्त्ति५ष्वा४वा५। आभिवि२श्वा२ः। अ२सायिस्पा२ऽर्द्धा४२ुः। आशस्ति२हा२ज२नि२ता२वृ२। त्रातू२ऽरासा४२ुयि२। त्वान्तू२ऽ[1]रियि२ु। त३रु३ष्य२ता। अ२३हो४वा५। हो४ऽ५यि५। डा५॥ ३३॥

ऋषिः—नोधाः॥ देवता—इन्द्रः॥ छन्दः—बृहती॥ स्वरः—मध्यमः॥

३१२. प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि।
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ॥

पुरीषम्—

१. प्र५यो५रि५रि५क्ष५ओ५ज५सा५६ए५। दि२वस्सदो२भ्य२स्परि। नत्वा। विँव्या। अ२होॅ३वा२। चा। रजः। अ२होॅ३वा२यि२। द्र२ पार्थिवाम्। अतिवाऽ२३यि३श्वा२म्२। वावक्षि२थ२। [2]इडाऽ२३४भा२३४ऽ३। [2]ओऽ२३४५यि५डा५॥ ३४॥

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३१३. असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु॥

प्राकर्षम्—

१. अ२सौ२हो२वा२३हा२ुयि२ु। वी३२३४दे५। वाऽङ्गोऽऋ। जी२ुक३मं४धा५ः। न्यौ२हो२वा२३हा२ु। स्मी३२३४नी५। द्रोजनु। षे२ुमु३वो४चा५। बो२धौ२हो२वा२३हा२ुयि२ु। मा३२३४सी५। त्वाहरि। अ२ुश्व३य४ज्ञै५ः। बो। २धौ२हो२वा२३हा२ुयि२ु। ना३२३४ स्तो५। म२मंध। सो२३४ऽ३। मा२३दा४ऽ५यि५ षू५६५६॥ ३५॥

---

१. मूलगानग्रन्थेऽत्र 'यरि' इत्याद्यन्तविपर्यत्वेन पठितं, तूर्यशब्दस्य 'तूरिय' इत्येतेनैव भाव्यम्, न तु 'तूयरि' इति। २. मूलगानग्रन्थेऽत्र त्रुटिपूर्तिरित्थंकृता—इडाऽ२३भा२३४ ४ऽ३ इति। संशोध्यैतदस्माभिः प्रकाशितम्। —सम्पादकः

निहवः—

२. आयिही२३। आयिही२। ए३हि३या२। ओ३२३४वा५हा२यि२। अ२सा२वि२दे२व२ज्ञो२ऋ२जी२का२३माऽन्धा२३ः। आन्धा२ः। अ३न्धा२। ओ३२३४वा५। हा२यि२। न्य२स्मि२न्नि२द्रो२ज२नु२षे२मू२३वोचा२३। वोचा२। वो३चा२। ओं३२३४वा५। हा२यि२। बो२धा२म२सि२त्वा२ ह२र्य२श्वा२३याज्ञैः२३ः। याज्ञै२ः। य३ ज्ञा२। ओ३२३४वा५। हा२यि२। बो२धा२न२स्तो२ म२मं२ध२ सो२मा२३दायिषू२३। अयिषू२। ए३षु३वा२ओ३२३४वा५। ब्धा२यि२। आयिही२३। आयिही२। ए३हि३या२। ओ३२३४वा५। हा२३४। औ५हो५वा५। ई३२३४५॥ ३६॥

[ इति ] अर्द्धप्रपाठकः॥

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

**३१४. योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि।**
**असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः॥**

योनिनीद्वे—

१. यो४नी५ः तआयि। द्रा२३सद। ना२अ३का४री५। ता४मा५। नृभायिः। पुरुहू२३। ता२प्र३या४ही५। आ४सा५ः। यथा। नो२३अवि। ता२वृ३ध४श्ची५त्५। दा४दा५ः। वसू। नी२३ममादा२३४ऽ३। चा२३सो४ऽ५मा५६५६यिद्ः॥ १॥

२. योनि२ष्ट३आ२यि२। द्र३स४द४ना५यि५। हो४वा५। आका२३रा२यि२त३मा४नृ४भी५ः। हो४वा५। पू। रु२हू२३। ता२प्र३या४ही५। हो४वा५। आसो२य३था२। नो३अ४वि४

ताप । होॅ४वाप । वार्द्धा२३ः । चा२ुयि२ुद्द३दो४व४सूप । हो४ वाप । नायिम२म३द२ुः । च३सो४मैपः । हो४वापहो४ऽपयिप । डाप ॥ २ ॥

ऋषिः—गातुः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३१५.अदर्दरुत् समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान् हन् ॥

औरुक्षये द्वे—

१. अ४द५र्द५रू४त्४ । स२म२सृ२जो२विखानि२[1] । त्व२मर्णाऽ- २३४वा५न्५ । ब२द्ब२धा२नाँ२अराम्णा२ः । म२हान्ताः२३४ मी५ । द्र२प२र्व्व२तं२वियाद्व२ः । सृ२जाद्धाऽ२३४रा५ः । अव२ यद्दा२न२वाऽ२३न्३हा२३४ऽ३न्३ । ओऽ२३४५यि५ । डा५ ॥ ३ ॥

२. अ४द५र्द५रु४त्स५म४सृ५जा४ःविखानि । त्वमर्णवान्बद्बधा- नाँ२अ२राऽ२३म्णा२ः । म२हान्तमिंद्रपर्व्वतम्वि२याऽ२३ द्वा२ः । सृ२जाद्धा२रा४२ुः । अवा२ॅयद्दा२न२ । वाऽ२ु । या३२३४अ५हो५वा५ । हा३२ ३४५न्५ ॥ ४ ॥

ऋषिः—पृथुर्वैन्यः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३१६.सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य कोना तना त्मना सह्याम त्वोताः ॥

पाथे द्वे—

१. सू४ष्वा५णा४सा५ः । इं३द्र२स्तु३ । म२सि३त्वा५ । स४नि४ ष्यं३त४श्चि५तु५वि५नृ५ । म्णा३वा३२३४जा४म्५ । आ५न५ः ।

---

१. मूलगानग्रन्थेऽत्र 'विषानि२' इति लिखितम् । —सम्पादकः

भ३रा२ओं३२ ३४वा५। सु५वि५तं४य४स्य५को५। ना४। ता४ना५त्मा४ना५।स२हि२या२।मा२३४ऽ३।तू२३वो४ऽ५ ता५६५६:॥५॥

२. ओं२३हो२३हो२यि२।सू३२३४ष्वा५।णासा:।इं३द्र२स्तु३। म२सि३ त्वा५।ओ२३हो२३हो२यि२।सा३२३४नी५।ष्यंता:। ची२३त्तुवि। नृ२म्ण३वा४जा५म्५। ओ२३हो२३हो२यि२। आ३२३४ना५:।भरा।सु२वि२ता३म्३।य२स्य३को४ना५। ओं२३हो२३हो२यि२। ता३२३४ना५। त्मनास२हि२या। मा२३४ऽ३।तू२३वो४ऽ५ता५६५६:॥६॥

ऋषि:—सप्तगु:॥ देवता—इन्द्र:॥ छन्द:—त्रिष्टुप्॥ स्वर:—धैवत:॥

३१७.जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दा:॥

सौपर्णे द्वे—

१. ज५गृ५ह्मा५ते५द५क्षि५ण५मो५हा५अ५हा५६ए५।इंद्रहाऽ२३ स्ता२म्२। व२सू२यवो। वसुपा२३। ता२यि२व३सु५। ना२म्२। ओं२३हा२। ओ२३। हा२३ए२। वि२द्माहित्वा। गोपती२३म्३।[1]शु२र३गो५ ना२म्२।ओ२३।हा२।ओ३२। हा२३। अ२स्मभ्यं चायि। त्रा२३म्वृष। ण२१२र३यिं५म्५। दा२:। ओ२३। हा२। ओ२३। हा२रयायिंदा३ उ३वा२३। ऊ२३४पा५।अ२होअ२हो-वाऽ२३४५हा५उ५।वा५।ई३२३ ४५॥७॥

१ वेदेऽत्र 'शूर' इति दीर्घोकारान्त: पाठ:। परं गानग्रन्थे 'शु' इति लघूकार: पठित:। -सम्पादक:

२. ज५गृ५ह्या४ते५द४क्षि५ण५म्। अ५हौ४हो४वा४हा५यि५। इं२द्रा२ु हा३२३४स्ता५म्।५ व२सू२यवो। वसुपा२३। ता२ुयि२ु व३सु५।नौ२।वा२ुओ३२३४वा५।हा२३हा२यि२। वि२द्मा हित्वा। गोपती २३म्।३ शू२ुर३गो५। नौ२। वा२ुओ३२३४ वा५। हा२३ हा२यि२। अ२स्मभ्यञ्चायि। त्रा२३म्३वृष।ण२ऽ२ुर३यि५म्५।दौ२।वा२ुओ३२३४वा५। हा२३हा२३४ अ५हो५वा५।ई३२३४५॥८॥

वात्सप्राणि त्रीणि—

३. होई४२ु।३।ज२गृ२ह्याते२दक्षि२ण२म्२।ई२ द्र२हास्ता४२ु म्२। हास्ता४२ुम्२। २। व२सू२यवो२॑व२सु२प२। ते२व२ सूना४२ुम्२।सूना४२ुम्२।२।वि२द्माहित्वा२गोपति२म्।२ शू२र२गोना४२ुम्२। गोना४२ुम्२। २। अ२स्मभ्य२ञ्चि२ त्रम्वृष२।णऽ२२या-यिदा४२ुः।आयिंदा४२ुः।२।हो[१]....२ु।२। होयाऽ२ु।वा३२३४ अ५हो५वा५।ई३२३४५॥९॥

४. आ४अ५हो५यि५२। आ४अ५हो५६वा५[२]...२यि२। २। अऽ२३ हो३वा२। ज२गृ२ह्याताथि। दक्षिणा२३म्३। इं२ुद्र३ह४-स्त५म्५द्र४ह४ स्त५म्५। द्र४ह४स्ता५म्५। व२सू२यवो। वसुपा२३। ता२ुयि२ुव३ सू४ना५म्५। व४सू५ना५म्५। २। वि२द्माहित्वा। गोपती२३म्। ३। शू२ुर३गो४ना५म्५।र४गो४ ना५म्५।२।अ२स्मभ्यञ्चायि। त्रा२३म्३वृष। णऽ२ुर३ यिन्दा५ः। र४यि४न्दा५ः। २। आ४अ५हो५यि५।२।आ४अ५ हो५६वा५।अ३॑हो२यि२। २।अऽ२३हो३वा२३४।अ५हो५ वा५।ई३२३४५॥१०॥

१,२. अत्र पत्रांशं नष्टमतोऽक्षरत्रयाभावो विद्यते। —सम्पादकः

५. हा५उ५३ । ओ । हौहोवा२ । ३ । ज२गृ२ह्णातायि२ । दक्षिणा२३म्३ । इं२ुद्रह४स्त५म्५ । द्र४ह४स्त५म्५ । द्र४ह४स्ता५म्५ । व२सू२यवो । वसुपा२३ । ता२ुयि२ुव३सू४ना५म्५ । व४सू४ना५म्५ । २ । वि२ द्माहित्वा । गोपती२३म् । ३ । शू२ुर३गो४ना५म्५ । र४गो४ना५म्५ । २ । अ२स्मभ्यञ्चायि[1] । त्रा२३म्३ वृषा । णः२ुर३यि४ दा५ः । र४यिं४ दा५ः । २ । हा५उ५३ । ओं । होहोवा२ । २ । ओ । हो । हो ऽ२ु । वा३२३४ । अ५हो५वा५ । ई३२३४५ ॥ ११ ॥

ऋषिः—वसिष्ठः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ २
३१८. इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
२ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः ॥

गौरीवितम्—

१. इं२द्र२न्ना३२३४रो५ । ने२मा२ुधा३२३४यि४र्ता५ । ह२वंता ऽ२३यि३ । य२त्पा२ुरा३२३४या५ः । यू२ना२ुजा३२३४ता५यि५ । धि२यास्ता ऽ२३ः । शू२रो२ुना३२३४ऋ४षा५ । ता२श्रा२ुवा३२३४सा५ः । च२कामा ऽ२३यि३ । आ२गो२ुमा३२३४ती५ । व्र२जा२ुयि२ुभा३२३४जा५ । त्वन्ना३ॅउ३वा२३ए२३ । उपा३२३४५ ॥ १२ ॥

ऋषिः—गौरिवीतिः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
३१९. वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
१ २ ३ १ २ ३ २ ३ १ २र ३ २ २ ३ १ २ ३ २
अप ध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान् ॥

---

१. अत्र मूलगानग्रन्थे 'अ२स्मभ्यश्चायि' इति पाठः । —सम्पादकः

वैदन्वतम्—

१. व५यो५हा५हा५उ५। सूपर्णाउपसेदुरायिंद्र२म्२। प्रि२यमेधाऽ ऋषयोनार्धमाऽ२३ना२ः। अपध्वांतमूर्णुहिपूर्धि२चाऽ२३क्षू२ः। मु२मु२ग्धि। औं३हो२३यि३। आ४२ऽ। स्मा२३न्निधा। ये२३-४ऽ३। वा२३। बा४ऽ५द्धा५६५६न्६ ॥ १३ ॥

ऋषिः—वेनो भार्गवः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३२०. नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥

महायामम्—

१. आ४२ुपाम्। अ३यी२यम्। अ३ॅहो२३यि३। आ४२ुयि२। ऊ४२ु। नाकेसुपार्ण मुपयात्प३तं२ताम्प३तं२तम्। अ३ॅहो२३ यि३। आ४२ुयि२। ऊ२। आ४२ु याम्। अ३ या२ यम्। अॅ३ हो२३यि३। आ४२ुयि२। ऊ४२ु। हृदावेनांतो अभ्यचाक्ष३त२ त्वा। क्ष३ त२त्वौ३ॅ। हो२३यि३। आ४२ुयि२। ऊ४२ु। आ४२ुयाम्। अ३या२ यम्। अ३ॅहो२३यि३। आ४२ुयि२। ऊ४२ु। हिरण्यपाक्षवरुणास्य३ दू२ताम्। स्य३दू२तम्। अ३ॅहो२३यि३। आ४२ुयि२। ऊ४२ु। आ४२ुयाम्। अ३या२ यम्। अ३ॅहो२३यि३। आ४२ुयि२। ऊ४२ु। यमस्ययोनौ शकुनांभु३र२ण्यूम्। भु३रण्युम्। अ३ॅहो२३यि३। आ४२ुयि२। ऊ४२ु। आ४२ुयाम्। अ३या२यम्औं३हो२३यि३। आ४२ुयि२। ऊऽ२। वा२हा२३ऽउवाऽ२३। ए२३। दिवम्। २। ए२३। दिवाऽ२३४५म् ॥ १४ ॥

ऋषिः—बृहस्पतिर्नकुलो वा ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३२१.ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥

ऋतसामनी द्वे—

१. ब्रह्मा । ब्राऽ२३ह्मा२ । ज२ज्ञा२नं२प्र२थ२मं२पुरास्ता२त्२ । विसायि । वाऽ२३यि३सी२ । म२त२स्सु२रु२चो२वे२न आव२ः । सबू । सा२३बू२ । ध्नि२या२उ२प२मा२अ२स्य वायिष्ठा२ः । सताः । साऽ२३ ता२ः । च२यो२नि२म२स२त२ श्चवायिवा२३४ऽ३ः । ओऽ२३४५यि५ डा५ ॥ १५ ॥

२. हुवेऽ३हा२३यि३ । २ । हिषाऽ३या२ । ब्रह्म२ज२ज्ञा । ना२३म्३प्रथ । मं२पु३र४स्ता५त्५ । वि२सीमताः । सु२रुचः । वे२न३आ४ वा५ः । स२बुध्नियाः । उ२पमाः । अ२स्य३वि४ष्ठा५ः । स२ तश्चयो । नी२३मस । त२श्च३वि४वा५ः । हुवेऽ३हा२३यि३ । २ । हि । षाऽ२ः । आ३२३४ । अ५हो५वा५ । ए२३ । ऋ२तम मृत२म्२ । २ । ए२३ । ऋ२तममृता३२३४५म्५ ॥ १६ ॥

ऋषिः—सुहोत्रः ॥ देवता—इन्द्रः ॥ छन्दः—त्रिष्टुप् ॥ स्वरः—धैवतः ॥

३२२.अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचांस्यस्मै स्थविराय तक्षुः ॥

वारवन्तीयम्—

१. अ५पू५र्व्या५अ५हो४हो४हा५यि५ । पु३रु२त३ । मा२नि३य४-स्मै५ । म२हे्वीरा । या२३तव । सा२यि२तु३रा४या५ । वि२ रप्शि२ । ना२यि२व३ज्रि४णे५ । शा२३४ऽ३न्त२मा३नी५ ।

वर्चा॒ꣳसिया। स्मा२३यि३ स्थवि। रा२ुय३त४क्षू५:। स्थ३वि४ रा॒५य५त५क्षू५:। स्थ२वि२। रा२३४ऽ३। या२३ता४ऽ५ क्षू५६५६। स्थविरा॒२य२त२क्षू३२३ ४५:॥ १७॥

[ इति ] दशतिः॥

ऋषिः—द्युतानः॥ देवता—इन्द्रः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
३२३.अव द्रप्सो अंशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः।
२ ३ २उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः॥

क्षुरपविणी द्वे—

१. अ२व२द्रा३२३४प्सा५:आꣳ२शू२ुमा३२३४ती२म्५। आती२३। ष्ठा३२३४५ त्५। ई२या२ुना३२३४ष्कृ५। ष्णो२ दा२ुशा३२३४भी५:। साहा२३। स्त्रा३२३४५यि५:। आ२व२ त्ता३२३४मी५द्र२श्शा२ुची३२३४या५। धामा२३। ता३२३४ म्५। आ२प२ुस्नी३२३४ही५। ति२न्न२ुमा३२३४णा५:। अधाऽ२ु द्रा३२३४अ॒५हो॒५वा५। अ२धा२३द्राऽ२३४५:॥ १८॥

२. अ५व५द्र५प्सा५६ए५। आꣳशु२म३ती॒३म३ति२ष्ठाऽ२३त्३। ई॒३या२ुन३ष्कृ४ष्णा५:। दाश२भि३स्स३ह२स्त्राऽ२३यि३:। आ॒३व२ुत्त३मिं४द्रा५:। शाचि२या॒३ध३मं२ताऽ२३म्३। अ३ पा२ुस्नी॒३हि४ ती५म्५। नृमणाऽ२३:। अ४धा४ऽ५द्रा५:। हो४ऽ५यि५। डा५॥ १९॥

३. अ३व४द्र४प्सो॒३अ४ꣳ४शु५म४ती५म्५। अहो२३४यि४। औ॒३हो॒४वा५। आती२३ष्ठा२त्२। औ३ॅहो२३४यि४। अ॒३हो॒४ वा५ई॒३या२ु न३: कृष्णा५:। अ३ॅहो२३४यि४। अ॒३हो॒४वा५। दाश। भा२ुयि२ुस्स३ ह४स्त्रै५:। अँ३हो२३४यि४। अ॒३हो॒४

वा५ः। आ३व२ुत्त३मिं४ द्रा५ः। अ३ॅहो२३४यि४। अ३हो४ वा५। शाचि। या२ुध३मं४ता५ म्५। अ३ॅहो२३४ यि४। अ३हो४वा५। अ३पा२ुस्नी३हि४ती५म्५। अ३ॅहो२३४यि४। अ३हो४वा५। नृमाऽ२ुणा३२३४अ५हो५वा५। अ२धा२३-द्राऽ२३४५ः॥ २०॥

४. अ३व४द्र४प्सो३अ४ः४शु५म४ती५म्५। ए२३। अ२३हो४ऽ५ वा५६। आताऽ२३४५यि५ष्ठा५६५६त्६। ई२या२नष्कृ२ ष्णोद२शभि२रस्स२ हस्त्रै२ः। आवत्तम्। आयिंद्रा२३श्शचि। या२ुध३मं४ता५म्५। अ४प५स्नी४हि५ति५ नृ५म४णा५ः। ओ४वा५। अ२ध२द्रा२३आऽ२३४५॥ २१॥

ऋषिः—द्युतानः॥ देवता—इन्द्रः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३२४. वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि॥

द्यौते द्वे—

१. हा२३। ओ२३हा२३। ओॅ३हा२३। हा२यि२। वृ२त्रस्यत्वा। श्व२सथात्। ई२ुषमा४णा५ः। वि२श्वेदेवाः। अजहू२३ः। ये२ुस३खा४या५ः। म२ रुद्भिरायि। द्रा२३सखि। यं२ुते३ अ४स्तू५अ२थेमावायि। श्वा२३ष्पृत। ना२ुज३या४सी५। हा२३। ओ३ॅहा२३। ओ३ॅहा२३। हा२३४। अ५हो५वा५। आअ२३हो३२३४५ता॥ २२॥

२. होये२३। ह२याये२३। ह३या२ु। अ३हो३२३४वा५। हा२यि२। वृ२त्रस्यत्वा। श्व२सथात्५। ई२ुष३मा४णा५ः। वि२श्वेदेवाः। अजहू२३ः। ये२ुस३खा४या५ः। म२रुद्भिरायिं। द्रा२३सखि।

यं२ुते३अ४स्तू५। अ२थेमावायि। श्वा२३ष्पृत। ना२ुज३
या४सी५। होये२३। ह२याये२३। ह३या२ु। अ३हो३२३४।
वा५। हा२३४। अ५हो५वा५। आअ२ु३हो२। आअ२३ हो३२
३४५॥ २३॥

ऋषिः—बृहदुक्थः॥ देवता—इन्द्रः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३२५.विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान॥

सोमसामनी द्वे—

१. वी४धू५म्५। दद्रार्दद्रा। णा२३ꣳ३सम। ना२ुयि२ुब४हू५ना५
म्५। यू४वा५। नꣳसार्नꣳसा। ता२३म्पलि। तो२ुज३गा४रा५।
दे४वा५। स्यपाश्या२३ कावि। य२ुम्म३हि४त्वा५। आ४द्या५।
ममार्मा। रा२३सहि। या२३४ऽ३। सा२३मा४ऽ५ना५६
५६॥ २४॥

२. हꣳ३ऽ४। आ३४ऽ५। ह५ꣳ५। ह३ꣳ३२३४५। वि२धुंदद्रा।
णा२३ꣳ३सम। ना२ुयि२ुब३हू४ना५म्५। यु२वानꣳसा।
ता२३म्३पलि। तो२ुजं३ गा४रा५। दे२वस्यपा। श्या२३कावि।
य२ुम्म३हि४त्वा५। हꣳ३ऽ४। आ३४ऽ५। ह५हꣳ३२३४५।
अ२द्याममा। रा२३सहि। या२३४ऽ३ः। सा२३मा४ऽ५ना-
५६५६॥ २५॥

ऋषिः—द्युतानः॥ देवता—इन्द्रः॥ छन्दः—त्रिष्टुप्॥ स्वरः—धैवतः॥

३२६.त्वं ह त्यत् सप्तभ्यो जायमानोऽ शत्रुभ्यो अभवः शत्रुरिन्द्र।
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥

इं [ द्र ] वज्रे द्वे–

२. अ५हो५यि५तु५वा५म्४हरत्यत्स२सभ्यो२जायमा२ना३२३४:। अ५हो५अ५शा४। त्रुभ्यो२अ२भ२व२श्शत्रुरिं२द्रा३२३४। अ५हो५यि५गूढे४। द्यावापृ२ थि२वीअन्वविं२दा३२३४:। अ५हो५यि५वि५भू४। मद्भ्यो२भुवने२भ्यो२रणंधा३२३ ४५:॥ २६॥

३. त्वो४हा४यि४।ह३त्यौ२वा२ओं३२३४वा५।स२सभ्यो२जा-यमा२। नोवा२३।ओंवा२३४५।अ५शो४हा४यि४।त्रु३भ्यौ२ वा२ओं३२३४वा५।अभ२व२ श्शत्रुरि२।द्रोवा२३।ओंवा२३ ४५।गू५[1]ढे४हा४यि२वा२[1]।ओ३२३४[ द्या ]वा५।पृ२थि२ वी अन्ववि२।दोवा२३।ओंवा२३४५।वि५भो४ हा४यि४। म३द्भ्यौ२वा२ओ३२३४वा५।भुवने२।भ्योवा२३।ओवा २३४५।र४णा४ऽ५न्धा५:।हो४ऽ५यि५डा५॥ २७॥

ऋषि:—वामदेव:॥ देवता—इन्द्र:॥ छन्द:—त्रिष्टुप्॥ स्वर:—धैवत:॥

३२७. मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम्।
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे॥

ऋषिप्रमाणपदगणित अर्द्धवेय: सूर्यवर्च्चसस्सामनी द्वे–

१. मे४डी५म्५। नत्वावज्रिनंभृष्टि२माऽ२३न्ता२म्२। पु२रुं२ धस्मानं वृषभ॑ऽस्थि२राऽ२३प्स्नू२म्२। क२रोष्यर्यस्तरुषा-यिदुवाऽ२३ स्यू२:। आयिंद्रद्यु२क्षम्। वृत्राऽ२३। हाऽ२ ण३२३४अ५हो५ वा५।गृ२णी२३षेऽ२३४५॥ २८॥

१. अत्र नष्टलेखत्वात्त्रुटिपूर्त्यर्थं केनचिदेवं पाठो लिखित: 'हो४हा४यि४।मद्भ्यौ२'।—सम्पादक:

२. मे४डि५न्न५त्वा४। वा२३४अ४होऽ५। ज्रायि। ण२म्भारष्टा-
यिमौ२। वा२३ऽ२३४। ता५म्५। पु३रु२३४अ४हो५। ध२
स्मानंवृ। ष२भःस्थायिरौ२। वा२३ऽ२३४। प्स्नू५म्५। क३
रा२३४अ४हो५। षि२ अर्यस्तरुषायिर्ढूवौ२। वा२३ऽ२३४।
स्यू५ः। इ३द्रा२३४अ४हो५। द्यु२क्षम्वृत्राऽ२३। हाऽ२ुणा३२
३४अ५हो५वा५। गृ२णी२षे३२३४५॥ २९॥

ऋषिः—वसिष्ठः॥ देवता—इन्द्रः॥ छन्दः—त्रिपदाविराडनुष्टुप्॥ स्वरः—गान्धारः॥

१ २ ३१ २३१२ ३१२ ३१ २३१२
३२८.प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम्।
१ २ ३ १ २र ३ २
विशः पूर्वीः प्र चर चर्षणिप्राः॥ ६॥

अहूशौ द्वौ—

१. प्र५वा४ः। माहेम२हे२वृ२धे[1]२। भराधू२३वा२म्२। प्र२चायि-
त२सायि। प्रासू२ुमा३२३४ती५म्५। कृणुध्वम्। ईहाऽ२ुवा३२-
३४यि४ शा५ः। पूऽ२३र्व्वी२ः। प्रचा। राऽ२३चा२। ष२णायि।
प्रा। अ२३हो४वा५। हो४ऽ५यि५डा५॥ ३०॥

२. हं३२३४५। प्र२वो२म२हा२ुयि२ुमा३२३४हे५। वृ३धा२३४ऽ
३यि३। भ२रा३२३४ध्वा५म्५। हं३२३४५। प्र२चे२त२सा२ु-
यि२ुप्रा ३२३४सू५। म३ता२३४ऽ३यि३म्३। कृ२णू३२३४-
ध्वा५म्५। हं३२३४५। वि२श२ष्पू२र्व्वा२यि२ुः। प्रा३२३४
चा५। र३चा२३४ऽ३। ष२णा३२३४यि४प्रा५ः। हं३२३४५।
हा५उ५ हौ५हो४वा५६। हा५उ५वा५। ई३२३४५॥ ३१॥

१. मूलगानग्रन्थेऽत्र 'वृ२द्धे२' इति पाठः। —सम्पादकः

